# सिद्धान्ततूलिका
# मुक्तिपदशक्तिवादश्च


श्रीमद्भिः श्रीभूतपुरवासिभिः

**श्री मद्वेङ्कटलक्ष्मणार्य-संयमिसार्वभौमैः**

**अनुगृहीतः**


**श्री बालधन्वि जग्गु वेङ्कटाचार्यस्वामिनां**

**१०१ तम जन्मर्क्षमहोत्सवमधुरस्मृति-संस्करणम्**


सम्पादकः – प्रकाशकश्च

महीशूरमहाराजसंस्कृतमहापाठशालाया विशिष्टाद्वैतविभागप्राध्यापकः

**बालधन्वि जग्गु सुदर्शनाचार्यः**

साहित्यवेदान्तविद्वान्

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते रम्यजामातृमुनये नमः

# भूमिका

लक्ष्मणवरवरवेङ्कटलक्ष्मणयोगीन्द्रपादपद्मानि ।
श्रीवासनृहरिवेङ्कटगुर्वोरप्याश्रये पदाब्जानि ॥

श्रीमदानन्दनाम सं· पुष्यबहुल प्रथमा कुजवासरः आश्लेषा

यादवाद्रि. २८–१–१९७५

अयि भोः सहृदयाः गुरुपादपद्मप्रणिहितमनसः मान्याः महान्तः विद्वद्वराः ! शृणुतावहितमनसः । श्रीमन्तः श्रीमद्वेङ्कटलक्ष्मणार्यसंयमिसार्वभौमाः अलमकार्षुः खलु श्रीभूतपुरीं न केवलं किन्तु– ससागरामेवैनां विश्वम्भराम् । ये किल श्रीभूतपुरीनित्यवासरसिका अपि सर्वदेशसर्वकालसर्वावस्थास्वपि श्रीयादवाद्रिविनिक्षिप्तनिजत्रिविधकरणाः, उभयवेदान्तपारावारपारदर्शिनः, श्रीघटिकाचलश्रीमन्महाचार्यलब्धचक्राङ्कनादिकाः, श्रीयादवाद्रिमहाचार्यलब्धसर्वतत्त्वरहस्यज्ञानाः, भगवन्निर्हेतुककटाक्षलब्धस्वयोगमहिमसाक्षात्कृतपरमपुरुषस्वरूपरूपगुणविभूत्यादिकाः, श्रीवरवरमुनिवरचरणतरुणसरसिजविरचितनिजप्रावण्याः, निजमन्त्रबलदूरोत्सारितदुरितभरितजननिकरपीडनव्यग्रदुष्टग्रहव्याध्याधयः, स्वानुष्ठानप्रदर्शितचरमपर्वनिष्ठाकाष्ठागरिष्ठाः, स्वप्रवचनपाटवसमावर्जितपटुतरधीविलसितशिष्यवृन्दाभिवन्दितस्वचरणारविन्दाः, श्रीयतिवर्यरामानुजार्यकैङ्कर्यधुर्याः, श्रीभूतपुरीगतं एम्बार् मठपीठमधिष्ठिताः, षोडशे वर्षे एव श्रीवेङ्कटाचलाधीशितुर्नियमनेन प्रथमाश्रमादेवाश्रमेणोरीकृतचतुर्थाश्रमाः, पराभिभवननिपुणनिजतेजोगणजृंभितस्वपरलोकाः, श्रीवेङ्कटाचलपतिसर्वकैङ्कर्यनिर्वहणधुरंधरैः परमहंसेत्यादिभिः तादात्विकपेरियजीयर् स्वामिभिः सानुग्रहं वितीर्णचतुर्थाश्रमाश्च ॥

तेषां शिष्यगणेषु प्रथितेष्वपि द्वावेतौ प्रथिततरौ । यस्त्वेको यादवाद्रिनिवासी पण्डितरत्नबिरुदाङ्कितः कुप्पण्णास्वामीति प्रसिद्धः स्थानिकं श्रीनिवास-

नरसिंहार्यः । अन्यश्च श्रीभूतपुरवमति कुण्डलस्वामी च ॥

तत्परम्परासु शिष्यगणा ववृधिरे । कृष्णस्वामिना शिष्येषु तर्कतीर्थ म. अ. लक्ष्मीनानार्यः, साम्प्रर्तीर्थ बालधन्वि जग्गुवेङ्कटाचार्यश्च प्रख्यातौ । मतीर्थ्यावेतौ प्राचार्यरचितान तालपत्रकोशेषु ग्रन्थलिप्या लिखितान् स्वाचार्यहस्ते प्रदत्तान् ग्रन्थान काञ्चनाक्षलिप्या प्रतिकृतीचक्रतु । अद्य यावदस्मद्गोचराणि अस्मीयानि ग्रन्थरत्नानीमानि —

(१) अष्टाक्षरस्य सर्वाधिकारत्वसमर्थनम् (मुद्रितम्) (२) अस्मद्गुरुचरितम् (मणिप्रवाळभाषा) (३) कैवल्यशतदूषणी (४) चरमश्लोकटिप्पणीविवरणम् (५) निक्षेपरक्षाव्याख्यानम् (६) न्यायसिद्धाञ्जनभावदीपिका (७) पुराणमार्गदीपिका (८) प्रपत्त्यनुपायत्वविचारः (मुद्रितः) (९) भक्तिरसायनम् (स्तोत्रम्) (१०) भूगोळभगोळनिर्णयम् (द्राविडभाषा) (द्विवारं मुद्रितम्) (११) महाचार्य दिनचर्या (१२) महाचार्यमङ्गलाशासनम् (१३) मुक्तकश्लोकाः (१४) मुक्तिपदशक्तिवादः (१५) मूलमन्त्राधिकारटिप्पणी (१६) रहस्यत्रयसंग्रह कारिकाः (१७) रामानुजाष्टपदी (मुद्रितम्) (१८) रामानुजसुप्रभातम् (मु.) (१९) विश्वगुणादर्शभावार्थटिप्पणी (२०) श्रीभाष्यकारदिव्यमङ्गलविग्रहवर्णनचूर्णिका (२१) श्रीभाष्यकारदिव्याभिषेकचूर्णिका (मुद्रिता) (२२) श्रीवचनभूषणव्याख्यानास्वादम् (मुद्रितम्) (२३) श्रुतप्रकाशिकाव्याख्या भावदीपिका (२४) सद्दर्शनसुदर्शनम् (चम्पूकाव्यम्) (२५) सिद्धान्ततूलिका (२६) सिद्धोपायसुदर्शनम् (२७) सिद्धतात्पर्यटिप्पणी (२८) सिद्धधर्मप्रकाशिका (२९) सिद्धधर्मविजयः (३०) सिद्धधर्मविजयमङ्गलदीपिका (३१) हसानन्दम् (महाकाव्यम्) इति । अन्ये च केचन ग्रन्थास्सन्तु ॥

इदानीमस्मद्गुरुवराणां तातपादानाञ्च श्रीबालधन्वि जग्गु वेङ्कटाचार्याणां एकाधिकशततमजन्मर्क्षमहोत्सवसमये तन्नामाङ्कितग्रन्थमालया (२१-२२)

एकविंशतितमत्वेन द्वाविंशतितमत्वेन च प्रथाचार्याणां ग्रन्थद्वयमेतं प्रकाश्य बहुतिथात्कालादन्तर्निगूढामीहां सफलीकृत्य कृतकृत्यतामभजम् । अनर्घाणीमानि ग्रन्थरत्नानि समेत्य सहृदया वेदांतिनस्तुष्यन्तु । मृष्यन्तु चास्य आचार्यकैङ्कर्यचापलात्प्रवृत्तस्यास्य साहसम् ॥

श्रुतिशिखरनिकरमहागुहान्तरनिलीनान् सूक्ष्मतमान् सदर्थान् सदाचार्यप्रज्वालितेन ग्रन्थात्मना परिणतेन निजज्ञानदीपेन प्रकाशयन्नयमाचार्यस्स्वस्य गभीरतां सरलताञ्चाभिव्यनक्ति ॥

एतादृशग्रन्थप्रकाशनकैङ्कर्यसाह्याचरणे वेदशास्त्रादिविभागेषु परीक्षादिसंयोजने च बद्धादरा मद्रपुरीस्था " Divine Science Trust (Regd.) " नाम्नी काचन संस्था वरीवर्ति । तस्यास्संघटकाः श्रीमन्तः ए. के. शठकोपार्याः । ग्रंथस्यास्य मुद्रणे साह्यमाचरद्भ्यस्तेभ्यो धन्यवादान् समर्पयामि । एवमग्रेऽपि एतादृशग्रन्थप्रकटने एवमेव साह्यमाचरन्त्विति च प्रार्थये ॥

एतद्ग्रन्थकर्तॄणां ग्रंथान्तराण्यपि मोहमयीनगरीस्थानन्तार्यशताब्दीसमित्या यथाक्रमं प्रकाश्यत इति श्रुत्वा तन्निर्वाहकान् के. के. ए. वेंकटाचार्यमहोदयान्, संस्थाव्यवस्थापकं वासुदेवसोमानिप्रभृति सोमानिकुलजातञ्चाभिनन्दामि ॥

श्रीमत्परमहंसेत्यादिबिरुदाङ्किताः श्रीभूतपुरीस्थाः एम्बार् मठवर्तमानपीठाधिपतयोऽपि अस्मिन् विषये विशिष्याशिषः प्रयुञ्जीरन्निति तत्सन्निधौ कृतज्ञतामर्पयन्नुक्तिमेतामुपसंहरामि ॥

इति विज्ञापयिता,

आचार्यचरणयुगभावनातरङ्गतरङ्गितान्तरङ्गः दासः

**बालधन्वि जग्गु सुदर्शनाचार्यः**

श्रीमन्महार्यकरुणालब्धविज्ञानसम्पदे ।
श्रीशैललक्ष्मणाचार्यमुनये नित्यमङ्गलम् ॥

## श्री व. लक्ष्मि वेङ्कटार्यग्रन्थमालाकुसुमानि

| | | | |
|---|---|---|---|
| १. | सटीका वृत्तमुक्तासारावली | (आन्ध्र) | ०-७५ |
| २. | रसगङ्गाधरमर्मप्रकाशमर्मोद्घाटनम् | (नागर) | ०-७५ |
| ३. | कावेरीमहिमादर्शः | ,, | ०-७५ |
| ४. | यदुगिरिनारायणस्तव. (इत्यादि) | (आन्ध्र) | २-०० |
| ५. | यादवगिरिमाहात्म्यसङ्ग्रहः | (कन्नड) | — |
| ६. | कुवलयानन्दचन्द्रिकाचकोरः | (नागर) | १५-०० |
| ७. | अलङ्कारतत्त्वम् | | |
| ८. | दशकुमारचरितविमर्शविमर्शः | ,, | — |
| ९. | वादभूमिविमर्शविमर्शः | ,, | — |
| १०. | विदितपदविचारः | ,, | — |
| ११. | यदुकुलयदुशैलसम्बन्ध (सटीक) | (कन्नड) | ०-२५ |
| १२. | भारतकृष्णमङ्गलम् १३. वराहादिमङ्गलम् | ,, | — |
| १४. | यतिराजमङ्गलम् | (नागर) | — |
| १५. | यतीन्द्रप्रवणप्रभाव | ,, | ३-०० |
| १६. | द्रमिडोपनिषत्सारसङ्ग्रहः (सटीक) | (नागर) | ३-०० |
| १७. | दिव्यप्रबन्धप्रामाण्यसमर्थनम् | (कन्नड) | |
| १८. | यमकिङ्करसंवादव्याख्या | (नागर) | १-५० |
| १९. | ,, | (कन्नड) | १-०० |
| २०. | दिव्यसूरिचरित्रानि | (नागर) | ६-०० |
| २१. | गीतार्थसङ्ग्रहव्याख्या | ,, | ३-०० |
| २२. | सिद्धान्ततूलिका | ,, | २-५० |
| २३. | मुक्तिपदशक्तिवादः | ,, | |
| २४. | दयासहस्रम् (श्रीवेङ्कटनाथ) | ,, | — |



॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते रम्यजामातृमुनये नमः ॥

॥ श्रीमन्महागुरवे नमः ॥

॥ श्रीमद्वेङ्कटलक्ष्मणार्य संयमिने नमः ॥

श्रीमद्वेङ्कटलक्ष्मणार्यसंयमीन्द्रैः अनुगृहीता

# सिद्धान्ततूलिका

## प्रथमः परिच्छेदः

**वरवरमुनिवरचरणौ तरुणसरोजातजठरकमनीयौ ।**
**अपि मम शिरस्यकस्मात् करुणापरिणामबाधितौ कलये ॥**

मुमुक्षोः मोक्षार्थं प्रमाणसारेण प्रमेयसारनिर्णयः कर्तव्यः । तत्र धर्मज्ञसमय एव सारभूतं प्रमाणम् । स्वतः प्रमाणस्य वेदस्यापि तत्सापेक्षत्वात् । तदुक्तमापस्तम्बेन :— १ "धर्मज्ञसमयः प्रमाणं वेदाश्च" इति ।

न च धर्मज्ञसमयस्यापि साक्षात्परम्परया वा वेदसापेक्षत्वं शङ्क्यम् । वेद-योगाद्यगोचरात्यन्तालौकिकार्थसाक्षात्कारक्षम भगवन्निर्हेतुककटाक्षलब्धदिव्य-चक्षुष्काणां पराङ्कुशादिधर्मज्ञानां समयस्य वेदसापेक्षत्वाभावात् । तदुक्तं गीतायां —

२ "नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा" इति ॥

न चैवमपि ३ "नो इतराणि" इति श्रुतिनिषिद्धापचरितानामपि प्रामाण्य-

१ आ. ध. सू. प्र. १–२, ३ । २ गीता. ११–५३ ।
३ तैत्तिरियोपनिषत् शि. ब. अनु. ११ ।

वारणाय धर्मज्ञसमये वेदाविरुद्धांश एव प्रमाणमिति वक्तव्यतया तस्य वेद-सापेक्षत्वमावश्यकमिति वाच्यम् ॥

तस्याः श्रुतेः धर्मज्ञसमयानन्तर्गतेन्द्रचन्द्राद्यपचरितविशेषविषयत्वेन तेषां प्रामाण्यापत्त्ययोगात् । तथा हि —

धर्मज्ञत्वं नाम — "अलौकिकश्रेयस्साधनविषयकासङ्कुचितसाक्षात्कार-वत्त्वम् । धर्मवीर्यसवर्धितज्ञानानामिन्द्रचन्द्रादीनां न चैतदस्ति । तेषां ज्ञानस्य साधनतारतम्यानुगुणत्वेन सङ्कुचितत्वात् । अधिकारारम्भककर्मणा तिरोहितत्वाच्च । तस्मादिन्द्रचन्द्रपराशरादीनामहल्यातारामत्स्यगन्धिनीगमनादिकं न धर्मज्ञसमयात-र्गतम् । इति ॥

नन्वेवमपि १ विप्रनारायणकृतदेवदेवीगमनस्य, २ नीलकृतपरद्रव्याप-हारस्य च प्रामाण्यापत्तिवारणाय वेदसापेक्षत्वं धर्मज्ञसमयस्याङ्गीकर्तव्यमेवेति चेन्न ।

तयोस्तद्दशायां धर्मज्ञत्वाभावेनैव तदापत्त्यसम्भवात् । तयोस्तदनन्तरमेव भगवन्निर्हेतुककटाक्षेण ज्ञानलाभ इति पूर्वाचार्यैरनुगृहीतत्वात् ।

किञ्च — पूर्वोक्तानामपचरितानां प्रामादिकत्वेन समयत्वाभावाच्च । उपादेयत्वेन धर्मज्ञप्रवर्तितो हि धर्मज्ञसमयः ?

अपि च — वेदविरुद्धस्य धर्मज्ञसमयस्याप्रामाण्याङ्गीकारे जामदग्न्य-कृतमातृशिरश्छेदरूपगुरुवचनपरिपालनस्याप्रामाण्यापत्तिः । न चेष्टापत्तिः ।

३ "जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनारण्ये पितुर्वचनकारिणा" इति श्रीरामायणे कौसल्यां प्रति तस्य प्रमाणतमधर्मज्ञसमयत्वेनोदाहृततया तद्विरोधात् ।

१ भक्ताङ्घ्रिरेणु नामा दिव्यसूरि । २ परकाल नामा दिव्यसूरिः ।
३ रामा. अयो स. २१-३४ ।

न च तस्य वेदाविरुद्धत्वं शङ्क्यम् । १"मातृदेवो भव" २"पितुर्दशनगुणं माता गौरवेणातिरिच्यते" इत्यादि प्रमाणैः पितुर्दशनगुणाधिकत्वेन प्रसिद्धायाः मातुः पितृवचनपरिपालनमात्रार्थं स्वहस्तेन परशुना शिरश्छेदनस्यात्यन्तवेदविरुद्धत्वस्य सुस्पष्टमवगम्यमानत्वात् । तस्मात् धर्मज्ञसमय एव सारभूतं प्रमाणमिति सिद्धम् ।

स च समयो द्विविधः । उपदेशरूपोऽनुष्ठानरूपश्चेति । उपदेशोऽपि द्विविधः । विवरणिरूपो विवरणरूपश्चेति । आद्य उपदेशो रहस्यत्रयात्मकः । अन्यस्सहस्रगाथोपनिषदादिरूपः । अनुष्ठानरूपस्समयो गुरुपरम्परादिवेद्यः । उपदेशाविसंवादी च । तदेवंविधेनोपदेशाविसंवादिना पराङ्कुशपरकालादि धर्मज्ञानुष्ठानरूपेण धर्मज्ञसमयेन सर्वप्रमाणसारभूतेन सर्वप्रमेयसारनिष्कर्षः कर्तव्य इति सिद्धम् ।

इति श्रीमद्वधूलकुलतिलक श्रीमन्महाचार्य-
चरणयुगभावित श्रीनिवासदासेन
विरचितायां सिद्धान्ततूलिकायां
**प्रथमः परिच्छेदः**

१ तैत्ति· शि· व· अ· ११ । २ मनुस्मृतिः २–१४५
सहस्रन्तु पितॄन् इति पाठः ।

## अथ द्वितीयपरिच्छेदः

अथ प्रमेयसारो निरूप्यते । मोक्षार्थमवश्यज्ञातव्यः प्रमेयः प्रमेयसारः । स च पञ्चविधः । स्वस्वरूपपरस्वरूपपुरुषार्थस्वरूपोपायस्वरूपविरोधिस्वरूपभेदात् । तत्र शेषत्वे सति पारतन्त्र्यं स्वस्वरूपलक्षणम् । शेषत्वं नाम ; परातिशयाधानेच्छयोपादेयतामात्रम् । तदुक्तं श्रीभाष्यकारैः वेदार्थसङ्ग्रहे — १ "परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्शेषी ।" इति । जैमिनिसूत्रञ्च — २ "शेषः परार्थत्वात्" इति । तस्य च शाबरभाष्यम् — ३ "यः परार्थस्तं वय शेषं ब्रूमः" इति । तान्त्रिकोक्तिश्च —

"तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणम् ।
परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते ॥" इति ।

तदिदं शेषत्वं द्विविधम् । स्वरूपयोग्यतारूपम्, फलोपधानरूपञ्चेति । तत्र परगतातिशयाधानेच्छाजन्योपादानमात्रार्हतारूपं शेषत्वं स्वरूपयोग्यतात्मकम् । तादृशोपादानमात्रविषयत्वं फलोपधानरूपं शेषत्वमिति ज्ञेयम् । तत्र स्वरूपयोग्यतारूपं शेषत्वं फलोपधानरूपशेषत्वनिरूपणीयम् । अतएवोच्यते —

"यथेष्टविनियोगार्हश्शेष इत्युच्यते बुधैः ।
ईश्वरेण जगत्सर्वं यथेष्टं विनियुज्यते ॥" इति ।

पुनश्शेषत्वं द्विविधम् । प्रधानशेषत्वं द्वारशेषत्वञ्चेति । स्वयं प्रयोजनातिशयघटितं शेषत्वं प्रधानशेषत्वम् । अन्यार्थातिशयघटितं शेषत्वं द्वारशेषत्वम् । पुनर्द्विविधम् । अनन्यार्हमन्यार्हञ्चेति । स्वाभाविकं शेषत्वं अनन्यार्हम् । आगन्तुकं शेषत्वमन्यार्हम् । शेषत्वं पुनः चतुर्विधम् । शेषीच्छाघटितम् । शेषेच्छाघटितम् । उभयेच्छाघटितम् । उदासीनेच्छाघटितञ्चेति ।

१ वेदार्थसङ्ग्रहे शेषलक्षणम् । २ जैमिनि सू. ३-१-२ ।
३ शाबरभाष्ये ३-१-२ ।

तदुक्तं तान्त्रिकैः —

" इच्छया यदुपादेयं यस्यातिशयसिद्धये ।
उभयानुमतैकैकजुषा तौ शेषशेषिणौ ॥ " इति ।

अत्रोभयेच्छाघटितं यच्छेषत्वं तदेव सामान्यतिरुच्यते । तदेवंविधेषु शेषत्वेषु मध्ये स्वस्वरूपलक्षणतयाभिमतं शेषत्वं भगवन्निरूपितं आचार्यशेषत्वद्वारकभागवतशेषत्वद्वारकम् । आचार्यनिरूपितप्रधानशेषत्वद्वारभूतं अनन्यार्हं दास्यरूपञ्च वेदितव्यम् । इदञ्च शेषत्वं भगवच्छेषत्वभागवतशेषत्वाचार्यशेषत्वरूपांशत्रयघटितम् । अत्र भगवच्छेषत्वरूपोऽशः प्रथमपर्वशब्देनोच्यते । भागवतशेषत्वांशो मध्यमपर्वशब्देन । आचार्यशेषत्वांशश्चरमपर्वशब्देन । तत्तत्फलोपधानक्रमापेक्षया च तथा व्यवहारः ।

न च सर्वशेषिणो भगवतः आचार्यापेक्षया द्वारशेषित्वं नोपपद्यत इति वाच्यम् । १ " न ते रूपं न चाकारः " इत्यादि प्रमाणबलेन ईश्वरस्वरूपरूपादीनां भक्तार्थत्वावगमेन तदनुसारेण भगवतो द्वारशेषित्वस्यैवाङ्गीकरणीयत्वात् । यद्वा — स्वरूपतः प्रधानशेषिणो भगवतः स्वभावतो द्वारशेषित्वसंभवेनानुपपत्त्यभावाच्च न कोऽपि दोषः इति ध्येयम् ।

अथ पारतन्त्र्यं नाम स्वव्यापारानर्हत्वम् । तच्च त्रिविधम् । स्वरूपपारतन्त्र्यम् । साधनपारतन्त्र्यम् । फलपारतन्त्र्यञ्चेति । तत्र स्वभोग्योद्देश्यकप्रवृत्त्यनर्हत्वं स्वरूपपारतन्त्र्यम् । अदृष्टद्वारकफलसाधनगोचरप्रवृत्त्यनर्हत्वं साधनपारतन्त्र्यम् । स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वं फलपारतन्त्र्यमिति विवेकः । तथा च — पूर्वोक्तदास्यरूपभगवच्छेषत्वविशेषवत्त्वे सति त्रिविधपारतन्त्र्यविशिष्टत्वं स्वस्वरूपलक्षणमिति फलितम् । अस्य स्वस्वरूपलक्षणत्वं स्वस्वरूपनिरूपकत्वमेव । तच्च यथावस्थितस्वस्वरूपविषयिताव्यापकविषयताकत्वम् ।

---

१ अ. जितन्ता – श्लो. ५ ।

ननु अहमिति प्रतीतौ धर्मिभूतज्ञानात्मिकाया यथावस्थितत्वस्वरूप-विषयिण्या शेषत्वपारतन्त्र्यविषयकत्वाभावेन तयोस्स्वरूपनिरूपकत्वं न संभव-तीति चेन्न । तस्याः प्रतीतेः भगवदात्मकस्वात्मविषयकत्वेन, तत्र भगवच्छ-रीरत्वस्यापि विषयतया शेषत्वपारतन्त्र्यविषयकत्वस्याप्यक्षतत्वात् । आधेयत्वे सति विधेयत्वे सति शेषत्वस्यैव शरीरत्वरूपत्वात् ।

तदुक्तं भाष्यकारैः — १ "यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं, तच्छेषतैकस्वरूपञ्च तत्तस्य शरीरम्" इति । अत्र शरीरलक्षणान्तर्गते चाधेयत्वविधेयत्वे अत्यन्तपारतन्त्र्यरूपे एव । अतो भगवच्छरीरत्वस्य भगवच्छेषत्वपारतन्त्र्यस्वरूपत्वेन भगवदात्मकस्वात्म-विषयिण्यामहमिति प्रतीतौ तच्छेषत्वपारतन्त्र्यविषयकत्वस्याप्यक्षततया भगव-च्छेषत्वपारतन्त्र्ययोः स्वस्वरूपनिरूपकत्वेन स्वस्वरूपलक्षणत्वं संभवत्येवेति सिद्धम् ।

इदञ्च स्वस्वरूपलक्षणं प्रथमरहस्ये प्रणवनमःपदाभ्यां प्रतिपाद्यते । तत्र प्रणवेन शेषत्वं प्रतिपाद्यते । तत्राकारोत्तरलुप्तचतुर्थ्या २ "तादर्थ्ये चतुर्थी वक्तव्या" इति शब्दवार्तिकानुशासनानुसारेण पारार्थ्यरूपतादर्थ्याभिधानात् । नमःपदेन च पारतन्त्र्यत्रयं प्रतिपाद्यते । तत्र प्रणवान्वितेन नमःपदेन स्वरूप-पारतन्त्र्यं, मध्यमनमःपदेन साधनपारतन्त्र्यं चरमपदान्वितनमःपदेन फलपार-तन्त्र्यं प्रतिपाद्यत इति विवेकः ।

अत्र ३ "इतिहासः पुरावृत्तं" इत्युक्तरीत्या धर्मज्ञसमयरूपपूर्वाचार-

१ श्रीभाष्ये – शरीरलक्षणम् ।

२ चतुर्थीविभक्तिप्रकरणे वार्तिकम् ।

३ नामलिङ्गानुशासने काण्ड १. शब्दादि वर्ग ४ ।

प्रतिपादकतया प्रबलप्रमाणभूतेतिहासश्रेष्ठभूतश्रीरामायणपुरुषेषु मध्ये श्रीशेषावतारभूतस्य श्रीरामानुजस्य निष्ठा शेषत्वे, पारतन्त्र्ये श्रीभरतनिष्ठा, भागवतानां द्वारशेषत्वे श्रीशत्रुघ्ननिष्ठा, आचार्यापेक्षया भगवतो द्वारशेषत्वे श्रीशबरीनिष्ठा, श्रीगुरुपरम्पराविषयश्रीमधुरकविप्रभृतिपूर्वाचार्यनिष्ठा च प्रमाणतयानुसन्धेयेति सर्वमवदातम् ।

इति श्रीमद्वाधूलकुलतिलक श्रीमन्महाचार्य-
चरणयुगभावितेन श्रीनिवासदासेन
विरचितायां सिद्धान्ततूलिकायां
**द्वितीयपरिच्छेदे**
**स्वस्वरूपनिरूपणोल्लासः प्रथमः**

अथ क्रमप्राप्तं परस्वरूपं निरूप्यते । प्राप्तशेषित्वे सति परम्प्राप्यप्रापकत्वं परस्वरूपस्य लक्षणम् । प्राप्तशेषित्वं नाम प्राप्तिविशिष्टत्वे सति शेषित्वम् । प्राप्तिर्नाम सम्बन्धः । स नवविधः । पितृपुत्रभावः, रक्ष्यरक्षकभावः, शेषशेषिभावः, भर्तृभार्याभावः, ज्ञातृज्ञेयभावः, स्वस्वामिभावः, आधाराधेयभावः, शरीरात्मभावः, भोक्तृभोग्यभावश्चेति । तदुक्तमाचार्यैः—

१ "पिता च रक्षकश्शेषी भर्ता ज्ञेयो रमापतिः ।
स्वाम्याधारोऽखिलात्मा च भोक्ता चाद्यमनूदितः ॥" इति ।

---

१ पाञ्चरात्रे ।

तदेवं नवविधास्वपि प्राप्तिषु स्वस्वामिभावरूपा प्राप्तिः प्रधानतमा । यद्वस्तुसत्तादिलाभालाभावेव यल्लाभालाभौ तौ स्वस्वामिनौ । शेषिचेतनत्वमेव स्वामित्वमिति वदन्ति । तन्न । किंचित्कारप्रतिसम्बन्धित्वस्यैव शेषित्वरूपतया तदभावेऽपि स्वस्वामिभावोपलब्धेः । तदुक्तं महाकविना —

१ "न किंचिदपि कुर्वाणस्सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥" इति ।

रहस्यमीमांसाभाष्यकृतस्तु — २ "यथेष्टविनियोगहेतुभूतसम्बन्धविशेषात्मकशक्तिविशेषरूपं स्वामित्वं" इति शेषित्वादन्यदेव स्वामित्वं व्याचख्युः । तथा च — एव रूपस्वस्वामिभावाद्यष्टविधप्राप्तिविशिष्टा, शेषशेषिभावरूपा प्राप्तिः प्राप्तशेषित्वमिति फलितम् । अत्रोच्यमानं शेषित्वं स्वातिशयोद्देशेन यथेष्टं सकलचेतनाचेतनविनियोक्तृत्वे सति तत्तद्विनियोगजन्यतत्तदतिशयजनितातिशयविशेषशालित्वरूपं बोध्यम् ।

परमप्राप्यत्वं नाम प्राप्तिविशेषफलीभूत-केवलपरार्थानुभवकैङ्कर्यप्रतिसम्बंधित्वम् । तादृशानुभवकैङ्कर्यप्रतिसम्बंधित्वं नाम — तथाविधानुभवकैङ्कर्यरूपचेतनप्रवृत्त्युद्देश्यातिशयशालित्वे सति तदनुद्देश्यानुषङ्गिकचेतनभोगजनितप्रीतिविशेषशालित्वम् ।

परमप्रापकत्वं नाम — स्वापेक्षया प्रापकान्तरशून्यत्वे सति प्रापकत्वम् । तच्च प्रापकत्वं चेतनप्रवृत्तिप्रतिरुद्धरक्षणप्रवृत्तिमत्त्वे सति वक्ष्यमाणव्याजभूतभक्तिप्रपत्तिविषयत्वे च सति निर्हेतुकस्वप्रसादरूपव्यापारसम्बन्धावच्छिन्नयादृच्छिकादिकैङ्कर्यपर्यन्तफलकारणत्वरूप बोध्यम् । इदञ्च कारणत्वं भगवतो निरपेक्षपुरुषकारभावविशिष्टलक्ष्मीगुणविग्रहविशेषविशिष्टवेषेण । तेन न प्राप्याभेदप्रयुक्तप्रापकत्वानुपपत्तिः ।

१ उत्तररामचरिते ६–५ । २ रहस्यमीमांसाभाष्ये ।

ननु – भगवतो निर्हेतुकप्रसादद्वारैव मोक्षकारणत्वे सर्वमुक्तिप्रसङ्ग इति चेन्न । प्रातिकूल्यव्यवसायमादाय सर्वमुक्तिप्रसङ्गवारणसंभवात् । तथा हि – ईश्वरस्तावत् भक्तिकुर्वाणः स्वाभाविकेशेशितव्यसम्बन्धप्रयुक्तसौहार्दरूपप्रसादविशेषेण स्वयमेव सकलजगदुज्जीवनकामः पितृपुत्रभावादिसम्बन्धेन सर्वेषां करणकलेबरदानादिपूर्वकं हितं प्रवर्तयन् शास्त्रप्रदानस्वावतारादिमुखेन स्वप्राप्तये स्वयमेवोपायः इतीममर्थं यथा स्त्रीबालादयोऽपि सुस्पष्टं जानीयुः, तथा कृषिं करोति । एवं पुनः कृषिकरणेऽपि ये तावत् निर्हेतुकोपायभावादि भगवद्वैभवेषु अभ्यसूयया भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिरूपभगवत्प्रातिकूल्यव्यवसायान्न विरताः भवेयुः, न तानीश्वरस्साधुकर्म कारयति । ये तावत्तथाविधभगवद्वैभवादिषु अद्वेषपूर्वकं निवृत्ताः दुर्व्यवसायाद्भवन्ति, तानेव भगवानुन्निनीषन् उत्तरोत्तरमाभिमुख्यादिजननपूर्वकं सात्विकसंभाषणसदाचार्यसेवादिसाधुकर्म कारयति । तदिदमुच्यते– १ "एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" इति । स्मृतिश्च —

२. "ईश्वरस्य च सौहार्दं यदृच्छासुकृतं ततः ।
विष्णोः कटाक्षमद्वेषमाभिमुख्यञ्च सात्विकैः ।
संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः ॥" इति ।

तदिदमाहुर्वात्स्यवरदाचार्यास्तत्वसारे —

३ "दुष्कर्मव्यवसायस्तु विरतो यस्तस्य पुंसः पुरा
भूयो जन्मसमार्जितान्यगणितान्यागांस्यनादृत्य यत् ।
तस्मानन्तसुखाप्तये च यतते लक्ष्मीसहायस्स्वयं
तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते ॥" इति ।

तदेवं सर्वमुक्तिप्रसङ्गस्य भगवतस्स्वप्रातिकूल्यनिवृत्तिमात्रसापेक्षतास्वी-

१ कौषीतकी ३–९ । २ पाञ्चरात्रे । ३ तत्वसारे ।

कारेण वारणमभवात्, तेन भगवदुपायत्वनिर्हेतुकत्वभङ्गाभावाच्च, निर्हेतुकस्वप्रमादद्वारा निर्हेतुकपुरुषकारभावविशिष्टलक्ष्मीगुणविग्रहविशेषविशिष्टो भगवानेव मोक्षकारणमिति सर्वं निरवद्यम् ।

इदञ्च परस्वरूपलक्षणं प्रथमरहस्ये क्रमेण पदत्रयप्रतिपाद्यम् । तस्मिन् भगवतः शेषित्वशरण्यत्वप्राप्यत्वानामपि क्रमेणाभिधानात् । अत्र परस्य प्राप्तत्वे भगवदवतारभूतस्य चक्रवर्तिसूनो, —

१ "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥"

इत्याद्युक्तवृत्तिविशेषः प्रमाणम् । तेन लोकलाभालाभरूपलाभालाभवत्त्वात्मकसर्वलोकस्वामित्वावगमात् । २ "राज्यं चाहं च रामस्य" इति भरतनिष्ठापि प्रमाणमेव । तेन सर्वेषां भगवत्स्वत्वावगमात् । किञ्च– विश्लिष्टायाः प्रणयिन्याः सन्देशभाषिणे गृध्रराजाय पक्षिणे, ३ "मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्" इति श्रीचक्रवर्तिसूनुना सकलविभूतिप्रदानमपि स्वामित्वे शेषित्वविशेषे च प्रमाणमेव । तेन यथेष्टं सर्वविभूतिविनियोगहेतुभूतसम्बन्धविशेषात्मकशक्तिविशेषवत्त्वरूपसर्वस्वामित्वस्य, तथा तद्विनियोक्तृरूपशेषित्वस्य चावगमात् ।

४ "अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥"

इत्युक्त्वा श्रीरामवृत्तिरपि शेषित्वे प्रमाणमेव । तेन यथेष्टविनियोक्तृत्वे सति तथाविधविनियोगजन्यातिशयजनितप्रीतिविशेषशालित्वरूपशेषित्वावगमात् ।

तथा – तस्य परमप्राप्यत्वे ५ "यस्त्वया सह स स्वर्गो निरयो

१ रामाय. अयो. २–४१ । २ रामाय. अयो. ८२–१२ ।
३ अर. ६८–३४ । ४ बाल १–८३ । ५ अयो. ३०–१८ ।

यत्त्वया विना।" इति सीतानिष्ठा, १ "एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः" इति भगवद्वृत्तिश्च प्रमाणम् ।

तथा भगवतः परमप्राप्यत्वे निर्हेतुकं तृणपिपीलिकादीनां श्रीरामेण परमपदनयनं प्रमाणतयानुसन्धेयम् । न च दिव्यदेशवासरूपसाधनानुष्ठानस्य कृतत्वात् निर्हेतुकोपायभावे तस्य प्रमाणत्वं न संभवतीति वाच्यम् । तैः मोक्षोद्देशेन विषयवासस्य कृतत्वे प्रमाणाभावात् । २ "पुल्लेरुम्बादियोन्तिन्निये" इति द्राविडोपनिषन्निर्हेतुकत्ववचनविरोधाच्च विषयवासस्य साधनत्वासंभवेन तस्य निर्हेतुकोपायभावे प्रामाण्यसंभवात् ।

भगवतः चेतनप्रवृत्तिप्रतिरुद्धरक्षणप्रवृत्तित्वे सामान्यधर्मनिष्ठस्य दशरथस्य भगवदलाभः प्रमाणम् । अत एव रावणभस्मीकरणशक्तयापि सीतया— ३ "शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थः तत्तस्य सदृशं भवेत् ॥" इति स्वप्रयत्ननिवृत्तिरनुष्ठिता ।

पुरुषकारवैशिष्ट्यावश्यकत्वे सीतासंनिधानासंनिधानाभ्यां भगवता काकरावणरक्षणारक्षणे, ४ "सीतासमक्षं काकुत्स्थं" इत्यादि श्रीलक्ष्मणनिष्ठा च प्रमाणम् । पुरुषकारभावस्य निर्हेतुकत्वे तु आर्द्रापराधराक्षसीविषयेऽपि तत्प्रवृत्तिः प्रमाणं इत्यादिकमूह्यम् । इत्यन्यत्र विस्तरः ।

इति श्रीमद्वधूलकुलतिलक श्रीमन्महाचार्य-
चरणयुगभावितेन श्रीनिवासदासेन
विरचितायां सिद्धान्ततूलिकायां

**द्वितीयपरिच्छेदे**

**परस्वरूपनिरूपणोल्लासो द्वितीयः**

१ युद्ध. १–१३ । २ सहस्रगाथा ७–५–१ । ३ सुन्दरकां. ३९–३० । ४ अर. १५–६ ।

अथ पुरुषार्थस्वरूपं निरूप्यते । पुरुषप्रार्थनाविषयत्वं पुरुषार्थसामान्यलक्षणम् । अत्र पुरुषप्रार्थनाविषयत्वञ्च भगवदतिशयमात्रार्थत्वविशिष्टवेषेण । न च – १ "सर्वस्स्वार्थं समीहते" इति न्यायेन स्वार्थ एव सर्वेषां प्रार्थनोदयेन परार्थमात्रविषयकप्रार्थना न सम्भवतीति वाच्यम् । तस्य न्यायस्य स्वातंत्र्याभिमानिमात्रविषयत्वात् । तदाह भगवान्भाष्यकारो वेदार्थसंग्रहे । २- "आत्माभिमानो यादृशस्तदनुगुणैव पुरुषार्थप्रतीतिः" इति । तस्मात्परशेषैकरसात्मस्वरूपयाथात्म्यज्ञानिना परार्थ एव पुरुषार्थ इति तद्विषयप्रार्थनाया न कोऽपि विरोधः ।

ननु – ३ "कर्ता शास्त्रार्थवत्त्वात्" ४ "शास्त्रफलं प्रयोक्तरि" इति सूत्रद्वये चेतनस्यैव कर्तृत्वं कर्तुरेव फलभोक्तृत्वं चेति प्रतिपादनेन, तद्विरोधेन शास्त्रफलस्य पुरुषार्थस्य केवलपरार्थत्वं न युज्यत इति चेन्न । स्वस्य प्रयोजनभगवत्प्रीतिसाधनतया पुरुषार्थत्वेन शास्त्रज्ञाप्तिपरार्थानुभवकैङ्कर्यरूपब्रह्मविषयकध्यानाराधनाद्यनुष्ठानकर्तृत्वस्य, तथाविधध्यानाराधनादि जनितानुषङ्गिकचेतनभोगभोक्तृत्वस्य च स्वाभाविकस्य तत्सूत्रद्वयप्रतिपादितत्वेन तद्विरोधाभावात् ।

अन्यथा सर्ववेदमूलभूते प्रथमरहस्ये चरमनमःपदेन चेतनस्य स्वप्रवृत्त्युद्देश्यभोक्तृत्वसामान्यनिषेधेन प्रथममध्यमनमःपदाभ्यां स्वार्थकर्तृत्वसामान्यनिषेधेन च तद्विरोधेन तत्सूत्रद्वयस्य अप्रामाण्यापातात् । अत एव स्वरूपप्राप्तविषये कर्तृत्वस्य तत्फलभोक्तृत्वस्य च औपाधिकत्वं ज्ञापितं भगवता भाष्यकृता – ५ "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रभाष्ये । ६ "यच्च 'प्रकृतेः क्रियमाणानी'त्यादिना गुणानामेव कर्तृत्वं स्मर्यते इति, तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता । न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन

१ शिशुपालवधे २–६५ । २ वेदार्थसंग्रहे । ३ ब्र सू. २–३–३३ । ४ जैमिनिसू. ३–७–१८ । ५ ब्र. सू. २–३–३३ । ६ गीता ३–२७ ।

गुणानामेव कर्तृत्वमित्युच्यते" इति ।

तस्मात् शेषत्वपारतन्त्र्यरूपस्वरूपविरुद्धत्वेन स्वरूपाप्राप्तयोः स्वार्थकर्तृत्वभोक्तृत्वयोः स्वरूपप्रयुक्तत्वाभावात् परार्थकर्तृत्व- आनुषङ्गिकफलपरार्थभोक्तृत्वयोरेव स्वरूपप्रयुक्तत्वेन स्वाभाविकत्वाच्च तदनुसारेण पुरुषार्थस्य केवलपरार्थत्वमेवोपपन्नमिति सिद्धम् ।

एवं रूपः पुरुषार्थो द्विविधः । ज्ञानहेतुकः, ज्ञानविपाकहेतुकश्चेति । आद्यो द्विविधः । अनुभवः, कैङ्कर्यञ्चेति । निरतिशयाभिनिवेशेन चेतनानुभवक्रमेण व्युत्क्रमेण वा प्रवृत्तं भगवन्तं प्रति तत्तदनुगुणं चेतनेन यत्प्रतिवीक्षणप्रदानं सोऽनुभव इत्युच्यते । स च ब्रह्मणा सह संलापसंश्लेषादिरूपः । अयमेव सायुज्यमित्युच्यते । ब्रह्मणा सह एकभोगान्वयस्यैव सायुज्यशब्दार्थत्वात् ।

सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधशेषवृत्तिः कैङ्कर्यम् । अत्र सर्वविधत्वं स्वकर्तृकप्रार्थनाभावप्रयुक्तप्रकारसंकोचाभाववत्त्वमेव । तेन सर्वचेतनानां प्रत्येकं सर्वविधकैङ्कर्यासंभवेऽपि न दोषः । तच्च कैङ्कर्यं द्विविधम् । ज्ञानकृतं, भक्तिकृतञ्चेति । स्वरूपनाशभीतिकृतं यत्कैङ्कर्यं तत् ज्ञानकृतम् । गुणानुभवजनितप्रीतिकारितं कैङ्कर्यं भक्तिकृतम् ।

ज्ञानकृतं द्विविधम् । इष्टकरणमनिष्टवर्जनञ्चेति । एतदुभयमपि शास्त्रीयनियमवदेव । भक्तिकृते तु न नियमः । "अत्यन्तभक्तियुक्तानां नैव शास्त्रं न च क्रमः" इत्युक्तत्वात् । अत एव श्रीगोपीभिः कामेन भगवत्परिचरणेऽपि, घण्टाकर्णेन ब्राह्मणप्रेतोपहरणेऽपि, श्रीशबर्या द्विजदष्टफलसमर्पणेऽपि, श्रीपराङ्कुशादिभिः स्वोपकारिणो भगवतः प्रत्युपकारश्रद्धया अयथावदात्मसमर्पणेऽपि, श्रीगोविन्दभट्टारकैः स्वाचार्याय स्वानुभवपूर्वकं पर्यङ्ककैङ्कर्यकरणेऽपि न दोषः इति ध्येयम् ।

अथ ज्ञानविपाकहेतुकोऽपि द्विविधः । स्वरक्षणप्रवृत्तिः पररक्षणप्रवृत्ति-

श्चेति । श्रीगोदादिकर्तृक अाद्य । कामादिदेवतान्तरभजन-त्रनन्दर्ण-न्त्व-मङ्गलाशासनादिरूप. । अन्त्यस्तु — आयोध्यकश्रीवृद्धादिकृतदेवतान्तरनमस्कारः । गोपीवृद्धाचरितबालरक्षाबन्धनम् । निर्निमेषतया नित्यजागरूकाणा सदोद्यतायुधाना नित्यसूरिसङ्घानामस्थानरक्षाव्यसनम् । श्रीमदनन्तेन स्वाङ्कस्थितभगवद्गोपनार्थं विरोध्युपगमनशङ्कया स्वमुखसहस्रेण परितो गरलाग्निवमनम् । विरोधिना दुष्प्रेक्ष्यं दुष्प्रवेशञ्च यथा तथा नीरन्ध्रतया परिवृत्य स्थिताना मुक्ताना मङ्गलाशासनम् । श्रीकुलशेखराचरितयुद्धसन्नाह. । श्रीभाष्यकारकृतधन्वन्तरिप्रतिष्ठेत्यादिरूप ।

नन्वेतेषा स्वस्वरूपपरस्वरूपाज्ञानकार्यत्वेन ज्ञानविपाकहेतुकत्व न सम्भवतीति चेन्न । ज्ञानविपाकस्य स्वजन्याज्ञानद्वारैव हेतुत्वस्य विवक्षितत्वात् । न च — ज्ञानविपाकस्याज्ञानहेतुत्वं विरुद्धमिति वाच्यम् । ब्रह्मध्यानस्येतरविषयविस्मृतिहेतुत्वेनाविरोधदर्शनात् । न च नित्यमुक्तादीनामज्ञानासभवशङ्का । तत्तु दोषरूपाज्ञानस्यैव निषेध्यत्वात् । अत एव स्वतः सर्वज्ञस्यापि भगवतः शास्त्रे. १ "अविज्ञाता सहस्रांशु " २ "अविज्ञाता हि भक्तानामागस्सु कमलेक्षण." इत्यादिना अज्ञानविशेष प्रतिपाद्यते ।

न च स्वस्वरूपपरस्वरूपाद्यज्ञान दोषरूपमेवेति वाच्यम् । प्रकृतिसंसर्गकृततदज्ञानस्यैव दोषरूपत्वेन ज्ञानविपाककृतस्य तस्य तथात्वाभावात् । ज्ञानस्य विपाको नाम निरतिशयप्रेमरूपत्वापत्तिरूपविषयिताविशेषः । तथाविधविषयिताविशेषस्य च तद्विरुद्धसर्वविषयिताभिभावकत्वं अवश्यमभ्युपगन्तव्यम् । अन्यथा— युगपदेवातीतानागताना भगवद्गुणविग्रहविभूत्यवस्थाविशेषाणा सर्वेषामपरिच्छिन्नानामप्यपरिच्छिन्नेनैव ज्ञानेन समतया नित्यमुक्तैस्साक्षात्काराभ्युपगमे भगवद्गुणविग्रहविभूतीना नित्यापूर्वत्वभङ्गप्रसङ्गात् । अतो यदा यदा यस्य यस्य गुणानुभवस्य विपाकस्तदा तदा तत्तदनुभवविपाकविशेषः तद्विरुद्धसर्वगुणाद्यनु-

१ विष्णु-सह. नामस. ४८३ । २ पाञ्चरात्रे ।

मत्राभिभावकः इति स्वीकरणीयम् । अत एव नित्यादीनां भगवद्गुणतारतम्य-विषयकपरस्परविवादेन द्रविडोपनिषदादिसिद्धेन न विरोधः । अत एव [१]"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्युक्तभूमलक्षणमपि सर्वेषां गुणानां प्रत्येकं संभवतीत्यपरमप्यनुक्तम् ।

तथा च – यदा तावत् भगवतः परमत्वप्यन्वज्ञानस्य विपाकविशेषश्चेतनस्य भवति, तदा तादृशविपाकविशेषेण भगवतः शेषित्वशरण्यत्वादिज्ञानानामभिभवात् तदा तदज्ञानेन स चेतनो विलम्बाक्षमतया अनग्रहणादिस्वप्रवृत्तावन्वेति । यदा तावत् सौन्दर्यसौकुमार्याद्यनुभवः तदा तेन भगवतः सर्वशक्तत्वादिज्ञानाभिभवात् तदज्ञानेन तद्रक्षणार्थमङ्गलाशासनादौ प्रवर्तत इति रीत्या सर्वसामञ्जस्यान्न कोऽपि दोषः इति ध्येयम् ।

अत्रोक्तं पुरुषार्थस्य केवलपारार्थ्यं प्रथमरहस्ये चरमनमःपदेन प्रतिपाद्यते । तेन स्वभोगनिषेधात् । तत्र कैङ्कर्यपारार्थ्यं [२]"याः काश्चन कृतयो मम भगवति तासु भगवत एव ताः मम ममता नास्ती"ति श्रुत्यापि प्रतिपाद्यते । अनुभवपारार्थ्यञ्च [३]"अहमन्नमहन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः ॥ अहमन्नमन्नमदन्तमद्मि" इति श्रुत्या प्रतिपाद्यते । अत्र कैङ्कर्यस्य केवलपारार्थ्ये, [४]"स्वयन्तु रुचिरे देशे क्रियतामिति मां वद" इत्युक्तश्रीलक्ष्मणनिष्ठा प्रमाणम् । अनुभवपारार्थ्ये, [५]"बद्धाञ्जलिपुटाः हृष्टाः नम इत्येव वादिनः" इत्युक्तश्वेतद्वीपवास्यादिनिष्ठाप्रमाणमित्यादिकमनुसन्धेयम् ।

इति श्रीमद्वधूलकुलतिलक श्रीमन्महाचार्य-
चरणयुगभावितेन श्रीनिवासदासेन विरचितायां सिद्धान्ततूलिकायां
**द्वितीयपरिच्छेदे**
**पुरुषार्थस्वरूपनिरूपणोल्लासः तृतीयः**

---

१ छां० ७–२४ । २ उपनिषत् । ३ तै० भृगु० अनु० १० ।
४ रा० अर० १५–७ । ५ भारते–शान्ति ३३७–४० ।

अथोपायस्वरूपं निरूप्यते । साध्यत्वे सत्युपायत्वं प्रकृतोपायसामान्य लक्षणम् । तच्च – निर्हेतुकस्वप्रसादद्वारा सिद्धोपायजन्यत्वे सति दृष्टविधय मोक्षकारणत्वम् । स च पञ्चविध. । कर्मज्ञानभक्तिप्रपत्त्याचार्याभिमानभेदात् तत्र कर्म कैङ्कर्यरूपम् । ज्ञानं स्वरूपप्रकाशरूपम् । भक्तिः प्राप्यरुचिरूपा प्रपत्तिस्स्वरूपयाथात्म्यज्ञानरूपा । आचार्याभिमानस्तत्कर्तृकाभिमानरूपपरगत स्वीकाररूपः इति बोध्यम् ।

अत्र कैङ्कर्यरूपकर्मणा नित्यकैङ्कर्यपर्यन्तमोक्षं प्रति अभ्यासरूपत्वेन, ज्ञानस्यानुभवकैङ्कर्यहेतुभूतस्वरूपज्ञानात्मकत्वेन, भक्तेः भोजनार्थक्षुधावदात्यति‌क प्राप्यरुचिरूपत्वेन, प्रपत्तेस्स्वार्थानुभवकैङ्कर्यादिविरोधिनिवृत्तिहेतुभूतस्वरूपयाथा त्म्यज्ञानत्वेन, आचार्याभिमानस्याचार्यविषयकभगवत्कर्तृकरक्षासङ्कल्पसम्बन्धघट. कत्वेन च दृष्टविधया मोक्षकारणत्वं बोध्यम् ।

ननु – एवंरूपकर्मादीनां दृष्टविधया मोक्षकारणत्वाभ्युपगमः, मोक्षस्य निरपेक्षसिद्धोपायसाध्यत्वसिद्धान्तविरुद्ध इति चेन्न । स्वद्वारभूतस्वप्रसादहेतु- तया यत्किञ्चिच्चेतनप्रवृत्तिनिरपेक्षत्वस्यैव सिद्धोपायनैरपेक्ष्यत्वेन विरोधाभावात् । ननु चैवं कर्मादीनां मोक्षं प्रति समुच्चयेनैव हेतुत्वस्वीकारः कर्मादीनां विकल्पेन मोक्षहेतुत्वसिद्धान्तविरुद्ध इति चेन्न । तस्य सिद्धान्तस्यादृष्टसाधनभूतकर्मयो- गादेः स्वार्थानुभवादिरूपमोक्षहेतुताविषयकत्वेन विरोधाभावात् । न चैवं सति मोक्षं प्रति दृष्टकारणभूतानां कर्मयोगादीनामननुष्ठाने मोक्षासिद्धिप्रसङ्गः । अनु- ष्ठाने च स्वातिशयोद्देशेन प्रवृत्त्यनर्हत्वरूपस्वरूपविरोधप्रसङ्गः इति उभयतः पाशा रज्जुरिति वाच्यम् । स्वयंप्रयोजनभगवन्मुखोल्लासार्थत्वेनैव तेषामनुष्ठाने तेनैव मोक्षसिद्ध्या मोक्षोद्देशेन तदनुष्ठानानावश्यकत्वात् । अतएवैतेषु केषाञ्चित् मुक्तिव्याजत्वोक्तिरप्युपपद्यते । अन्यार्थस्यैव सतः प्रसङ्गादुपकारकत्वस्यैव व्या- जत्वरूपत्वात् ।

एतेन कर्मज्ञानादीनां दृष्टविधया मोक्षकारणत्वे विधेयत्वानुपपत्तिरित्यपि प्रत्युक्तम् । दृष्टविधया मोक्षसाधनत्वस्याज्ञातस्य ज्ञापनेन स्वयंप्रयोजनभगवन्मुखोल्लासरूपादृष्टसाधनताज्ञापनपूर्वकमप्रवृत्तप्रवर्तनेन च विधेयत्वसंभवात् । तस्मात् सिद्धोपायकृपिफलीभूतानां स्वयंप्रयोजनभगवन्मुखोल्लासप्रयोजकानां, अत एव तथाविधभगवन्मुखोल्लासमात्रोद्देश्यकचेतनप्रवृत्तिसाध्यानां, अत एव मोक्षसिद्ध्यनुद्देश्यकसामग्रीविशेषसम्पन्नानां, स्वयंप्रयोजनकर्मादीनां मोक्षं प्रति दृष्टकारणत्वाभ्युपगमे न कोऽपि विरोधः इति सर्वमुपपन्नम् ।

अत्र प्रथमरहस्ये लुप्तचतुर्थ्या कैङ्कर्यात्मककर्मणां, मकारेण ज्ञानस्य, प्रार्थनार्थकक्रियापदेन भक्तेः, स्वस्वरूपयाथात्म्यपरेण नमःपदेन प्रपत्तेः, स्वस्वरूपकाष्ठापरेण तेनैवाचार्याभिमानस्य च प्रतिपादनमनुसन्धेयम् । अत्र कर्मादिपञ्चकविषयपराङ्कुशादि-दिव्यसूरिनिष्ठाः अपि प्रमाणतयानुसन्धेयाः इत्यन्यत्र विस्तरः ।

इति श्रीमद्वकुलकुलतिलक श्रीमन्महाचार्य-
चरणयुगलभावितेन श्रीनिवासदासेन
विरचितायां सिद्धान्ततूलिकायां
**द्वितीयपरिच्छेदे**
**उपायनिरूपणोल्लासः तुरीयः**

अथ विरोधिस्वरूपं निरूप्यते । स्वरूपनाशप्रयोजकाज्ञानविषयत्वं विरोधिस्वरूपसामान्यलक्षणम् । तच्चाज्ञानं द्विविधम् । अन्यथाज्ञानं, विपरीतज्ञानञ्चेति । तथा च स्वस्वरूपनाशकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं विरोधिलक्षणं फलितम् । स च विरोधी पञ्चविधः । स्वस्वरूपविरोधी, परस्वरूपविरोधी, पुरुषार्थविरोधी, उपायविरोधी, विरोधिविरोधी चेति ।

तत्र स्वस्वरूपविनाशप्रयोजकस्वस्वरूपविषयकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं स्वस्वरूपविरोधिलक्षणम् । स्वस्वरूपविनाशकपरस्वरूपविषयकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं परस्वरूपविरोधिलक्षणमिति रीत्या तत्तल्लक्षणानि द्रष्टव्यानि । तत्र स्वस्वरूपविपरीतज्ञानं देहात्मभ्रमादिः । अतो देहादयस्स्वस्वरूपविरोधिनः । स्वस्वरूपान्यथाज्ञानञ्चान्यशेषत्वस्वप्रयत्नस्वभोगार्हत्वरूपस्वस्वातन्त्र्यादिज्ञानम् । अतः अन्यशेषत्वादयस्स्वस्वरूपविरोधिनः ।

एवं परस्वरूपविपरीतज्ञानं देवतान्तराणां शेषित्वशरण्यत्वप्राप्यत्वादिज्ञानम् । कर्मादीनां साधनत्वज्ञानम् । स्वात्मस्वरूपादीनां प्राप्यत्वज्ञानञ्च । अतस्तानि परस्वरूपविरोधीनि । परस्वरूपान्यथाज्ञानञ्च — अन्यार्हशेषत्वनिरूपकत्वेन, सोपाधिकशरण्यत्वेन, स्वार्थानुभवकैङ्कर्यप्रतिसंबंधित्वरूपप्राप्यत्ववत्त्वेन च ज्ञानम् । अतस्तान्यपि परस्वरूपविरोधीनि ।

एवं पुरुषार्थस्वरूपविपरीतज्ञानं त्रैवर्गिकादीनां पुरुषार्थत्वज्ञानम् । अतस्तेषां पुरुषार्थत्वं पुरुषार्थस्वरूपविरोधी । पुरुषार्थस्वरूपान्यथाज्ञानञ्च भगवदनुभवकैङ्कर्यादीनां स्वार्थत्वेन ज्ञानम् । अतस्तेषां स्वार्थत्वमपि पुरुषार्थस्वरूपविरोध्येव ।

एवमुपायस्वरूपविपरीतज्ञानञ्च – परार्थ – कैङ्कर्यरूपपरमपुरुषार्थलक्षण-मोक्षं प्रत्यनुपायभूतानां प्रस्तुत – तत्प्रतिबन्धकस्वार्थानुभवादिहेतुभूतानां कर्मयोग-ज्ञानयोगभक्तियोगप्रपत्तियोगाचार्यविषयकस्वगतस्वीकाराणां उपायत्वज्ञानम् । अतस्ते उपायस्वरूपविरोधिनः । उपायविषयकान्यथाज्ञानञ्च – मोक्षं प्रत्य-दृष्टसाधनत्वेन ज्ञानम् । अतः तदप्युपायस्वरूपविरोधि ।

अथ विरोधिस्वरूपविपरीतज्ञानं विरोधिभूतदेहविरोधित्वेन, भगवदा-त्मकत्वेन चानुकूलभूतानां विषशस्त्रादीनां विरोधित्वेन ज्ञानम् । अतस्तेषां विरोधित्वं विरोधिस्वरूपविरोधि । विरोधिस्वरूपान्यथाज्ञानञ्च — विरोधि-भूतस्य देहेंद्रियादेः १ "शरीरमाद्यं खलु धर्मसाधनम्" इत्यादृयुक्तसाधनान्तर-साधनत्वादिज्ञानप्रयुक्तानुकूल्यज्ञानम् । अतस्तदपि विरोधिस्वरूपविरोधीति । शिष्टं सर्वमन्यत्र विस्तरतो वर्णितमित्यलं पल्लवितेनेति सर्वं समञ्जसम् ।

इति श्रीमद्वकुलकुलतिलक श्रीमन्महाचार्य-
चरणयुगलभावितेन श्रीनिवासदासेन
विरचितायां सिद्धान्ततूलिकायां
द्वितीयपरिच्छेदे
विरोधिस्वरूपनिरूपणोल्लासः
चरमस्समाप्तः
॥ ग्रन्थश्च ॥

वरवरमुनिचरणौ तरुणसरोजातजठरसुकुमारौ ।
अपि मम शिरस्यकस्मात् करुणापरिणामवापितौ कलये ॥

---

१ कुमारसं. ५–३३ ।

## (सिद्धान्ततूलिका) शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धि | पृष्ठे | पंक्तौ | अशुद्धि | शुद्धि. |
|---|---|---|---|---|---|---|---|
| ३ | ७ | तत्र आद्यः इति पाठः | | ९ | १८ | यस्तु | यतस्तु |
| ३ | ८ | अन्यः अन्त्यः इति पाठः | | ९ | २० | स्मा | स्या |
| ४ | १४ | निरू | निरूप | १० | १९ | त्त्वा | त्का |
| ५ | १७ | म्यो | गो (पा) | १४ | ७ | तयु | तखरयु (पा |
| ८ | २२ | प्रायक | प्रापक | १६ | २० | त्का | ल्का |
| ८ | २१ | लक्ष्मीगुण | लक्ष्मीस्वगुण | | | | |



## (मुक्तपदशक्तिवादः) शुद्धिपत्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ४ | ६ | बिरो | विशे | ६ | १६ | भव | भाव |
| ४ | २२ | स्वरूप | स्वरूपरूप | ७ | २१ | गि | ग्नि |
| ५ | १७ | एतान् | एनान् | ८ | २३ | स्वस्था | स्वस्या |
| ६ | १२ | निवृत्त | निवृत्ता | १४ | १२ | परम | परमत |



श्रीवाधूलरमाप्रवाळरुचिरस्वक्सैन्यनाथांशज-
श्रीगुर्विन्द्रमहार्यलब्धनिजसत्सत्त्वं श्रिताभीष्टदम् ।
श्रीरामानुजयोगिवर्यविलसत्कैङ्कर्यसंस्थापकं
श्रीमद्वेङ्कटलक्ष्मणार्ययमिनं तं सद्गुण भावये ॥



श्रीः

श्रीमते रामानुजाय नमः

श्रीमते रम्यजामातृमुनये नमः

श्रीमद्वेङ्कटलक्ष्मणार्य-संयमिने नमः

श्रीमद्वेङ्कटलक्ष्मणार्य-संयमीन्द्रैः

अनुगृहीतः

# मुक्तिपदशक्तिवादः

अञ्जनघनमदभञ्जनमपि च कयाचित्सुरञ्जितं कलया ।
अञ्जनविधुरदृगञ्जनमञ्जनगिरिरञ्जनं भजे भवुकम् ॥ १ ॥

निजगळवकुळगळन्मधुललितकलालापनिगळितश्रीशम् ।
करकलितबोधमुद्रं किमपि विनिद्रं समाश्रये भद्रम् ॥ २ ॥

निगमयुगलसारौ श्रावितौ येन धाम्ना
परमपि परतन्त्रं पात्रमेवोपकल्प्य ।
तदिह निखिलरक्षादीक्षितं नौमि नत्वा
वरवरयतिवर्येत्यादिनामाभिलापैः ॥ ३ ॥

कलशजलधिकन्याकान्तवीक्षामृतौघैः
अनुकलमभिषिक्तामार्यगोष्ठीं विभाव्य ।
विपलमिह विचारं मुक्तिशब्दस्य शक्तेः
कलयति कुतुकाच्छ्रीशैलयोगीशदासः ॥ ४ ॥

अत्र तावन्मुक्तिशब्दशक्तिर्विचार्यते । तदिदं सर्वसंप्रतिपन्नम् -- "संसारनिवृत्तित्वमेव मुक्तिशब्दशक्यतावच्छेदक" मिति ।

युक्तञ्चैतत् — "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारबन्धस्थितिमोक्षहेतुः" इत्यादिश्रुत्या तत्तथात्वावगमात् । संसारो नाम स्वरूपतिरोधायकाचित्संसर्ग एव । "तदापीतेस्संसारव्यपदेशात्" इति सूत्रे अचित्संबन्धस्यैव संसारशब्देन व्यपदेशात् ।

ननु — "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा" "त इमे सत्याः कामाः अनृतापिधानाः" इत्यादिषु कर्मणामेव तिरोधायकत्वमुक्तम् । तत्कथमचित्संसर्गस्य तदुच्यते ? इति चेन्न ।

"पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ" "देहयोगाद्वा सोऽपि" इत्याभ्यां सूत्राभ्यां सिद्धान्ते भगवत्सङ्कल्पात्मकानां कर्मणामचिद्द्वारैव तिरोधायकतायास्सिद्धत्वात् । तद्युक्तम् — तिरोधायकाचित्संसर्गरूपसंसारनिवृत्तित्वमेव मुक्तिपदप्रवृत्तिनिमित्तमिति ।

एतेन — यज्जिज्ञासाधिकरणभाष्ये "अविद्यानिवृत्तिरेव मोक्षः" इत्यनुगृहीतम्, तदपि व्याख्यातम् । तत्रत्याविद्याशब्दस्य पुण्यपापरूपकर्मपरत्वेऽप्यचिद्द्वारैव कर्मणां प्रतिबन्धकतया तन्निवृत्तिवाचकस्याचिन्निवृत्तावेव पर्यवसानात् ।

व्यासार्यैस्तु— तत्रत्याविद्याशब्दः प्रतिबन्धकमात्रपरत्वेन व्याख्यातः । प्रतिबन्धकत्वमपि साक्षादचित्संबन्धस्यैव श्रूयते — "तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ संपत्स्ये" । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति ।

तस्मादिह मुक्तिर्बन्धनिवृत्तिरूपैव मुक्तिरुच्यते । यत्तावदत्राधिकरण-भाष्यम् — "अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते" इति । तच्च — न मुक्तिशब्दप्रवृत्तिनिमित्तपरम् । किन्तु मुक्तिस्वरूपयाथात्म्यप्रदर्शनपरम् । एतदुक्तं भवति — सिद्धान्ते अभावस्य भावान्तरत्वान्मुक्तिशब्दप्रतिपाद्यसंसारनिवृत्तिरूपोऽभावः ब्रह्मविदां किंरूप इति चेत् — स्वाभाविकपरमात्मानुभवरूप एव । न स्वरूपोच्छेदादिरूप इति तत्स्वरूपप्रदर्शनपरं तद्भाष्यवचनमिति ।

अत एवानुगृहीतं "त्रय्यन्तनिष्णाता आचक्षते" इति । त्रय्यन्तनिष्णाताः — ब्रह्मनिष्ठाः इत्यर्थः । शब्दनिष्ठायाः अर्थनिष्ठाद्वारकत्वात् । अनेनात्मनिष्ठाः व्यावर्त्यन्ते । एतेनात्मनिष्ठप्राप्यायाः मुक्तेः स्वाभाविकपरमात्मानुभवरूपत्वाभावेऽपि न क्षतिः । स्वाभाविकपरमात्मानुभवे अविद्योच्छेदपूर्वकत्वोक्तिः अविद्योच्छेदस्य स्वाभाविकपरमात्मानुभवात्मकत्वज्ञापनार्था । यदुच्छेदपूर्वको यो भावस्तदुच्छेदस्तद्भावात्मकः इति नियमात् । घटोच्छेदपूर्वककपालत्वावस्थायां घटनाशात्मकत्वस्य, कपालोच्छेदपूर्वककापालिकावस्थायां कपालनाशात्मकत्वस्य च दर्शनात् ।

तथा च — ब्रह्मविदां यस्स्वाभाविकपरमात्मानुभवः प्राप्तिदशायां भवति, तस्याविद्योच्छेदपूर्वकत्वेन अविद्योच्छेदात्मकत्वात्, तद्गतमविद्योच्छेदत्वमात्रं निमित्तीकृत्य तमेव परमात्मानुभवं ब्रह्मविदो मोक्षशब्देन व्यवहरन्तीति तद्भाष्यनिर्गलितोऽर्थः । "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके" इति मोक्षदशायामात्मनोऽसद्भावं शङ्कमानं नचिकेतसं प्रति मोक्षस्य भावान्तररूपत्वज्ञापनपूर्वकं तेन रूपेणात्मसत्ताया एव वक्तव्यत्वेन तदतिरिक्तमुक्तिपदशक्तिशिक्षायास्तत्राप्रकृतत्वात् ।

किञ्च — स्वाभाविकपरमात्मानुभवस्य मुक्तिपदनिमित्तान्तर्भावे सर्वेषां मुक्तिशब्दानां गौणत्वमेवापद्येत । तथाहि — ब्रह्मविद्याफलवाक्येष्वेव हि प्रायशो मुक्तिवाचकानि पदानि श्रूयन्ते । तत्र सर्वत्र तत्तद्विद्यायां "मुक्तिपद-वाच्यं भावयेत्" इति हि विधिवाक्यार्थो वर्णनीयः । तच्च न सम्भवति । स्वाभाविकब्रह्मानुभवस्य मुक्तिपदवाच्यस्य स्वाभाविकत्वादेव अभाव्यत्वात् । कार्यमेव हि भाव्यम् । तद्दोषपरिहारार्थे "सविशेषणे ही" ति न्यायेन मुक्ति-पदस्य विशेषणभूताविद्योच्छेदमात्रपरत्वाश्रयणे भवति सर्वेषा प्रयोगाणा गौणत्व-मिति ।

ननु — ब्रह्मानुभवस्यापि साध्यत्वाङ्गीकारान्न दोषः इति चेन्न । सम्प-द्याविर्भावाधिकरणविरोधात् । "अयं प्रत्यगात्मा अर्चिरादिना परंज्योतिरुपसपद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः ; नापूर्वाकारोत्पत्तिरूप" इति तद्भाष्यानुगृहीतत्वात् । उपात्तानि च तत्प्रमाणतया तत्रैव शौनकवचनानि —

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात्क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ इति ।"

लघुसिद्धान्तारंभभाष्यश्रुतप्रकाशिकायां च — "यद्यप्यनिष्टनिवृत्तिरिष्ट-प्राप्तिश्च द्वयमस्ति । तथापीष्टतमब्रह्मप्राप्तेः स्वतस्सिद्धायाः पृथगुपायसाध्यत्वा-भावात्प्रतिबन्धनिवृत्तिरेव साध्या । स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रति-बन्धके निवृत्ते सति ब्रह्मस्वरूपगुणविभवादिकं सर्वे साक्षात्करोति । यथा सेतौ भिन्ने जलं स्वयमेव गच्छति । न केनचिन्नेतव्यं, तद्वत् । यथा अश्मानयने

मार्गसमीकरणत्प्रापणे उभे अपि पृथक्त्वमाध्ये न; तथेत्यर्थः । यद्वा भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिः अनुगृहीतम् ॥

तस्माद्ब्रह्मानुभवस्य ब्रह्मानुभवत्वेन रूपेणासाध्यत्वात् तस्य मोक्षपदशक्यतावच्छेदकान्तर्भावाभ्युपगमे ब्रह्मविद्याफलवाक्यगतानां बहूनां मुक्तिवाचिशब्दानां गौणत्वापत्तिः दुष्परिहरैवेति संसारनिवृत्तित्वमात्रमेव मुक्तिशब्दशक्यतावच्छेदकमित्यकामेनापि स्वीकर्तव्यत्वात् अस्त्राधिकरणभाष्यवचनं ब्रह्मविद्याफलमोक्षस्वरूपप्रदर्शनमात्रपरमेव । "ये यं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके" इति सर्वबन्धविनिर्मोकलक्षणमोक्षविशेषदशायामात्मनस्सद्भावासद्भावौ शङ्कमानं प्रति तन्मोक्षस्वरूपस्यैव वक्तव्यतया प्रकृतत्वाच्च ॥

तथा च — ब्रह्मविद्याफलाविद्यानिवृत्तिप्राप्तिदशायां निरतिशयानन्दलक्षणो यस्स्वाभाविकपरमात्मानुभवः 'भावान्तरमभावः' इति न्यायेन तद्गतमविद्यानिवृत्तित्वं निमित्तीकृत्य तमेव मोक्षपदेन सन्तो व्यवहरन्तीति न मुक्तस्य स्वरूपासत्त्वादिशङ्कावकाशः इत्येतावदेवास्त्राधिकरणभाष्यवचनतात्पर्यमिति युक्तं संसारनिवृत्तित्वमेव मुक्तिशब्दशक्यतावच्छेदकमिति ॥

किञ्च — स्वाभाविकपरमात्मानुभवत्वस्यापि मुक्तिशब्दशक्यतावच्छेदककोटिप्रवेशे पञ्चाग्निविद्याफले मुक्तिव्यवहारभङ्गप्रसङ्गः । तत्र ब्रह्मानुभवसद्भावे प्रमाणाभावात् । न च "स एतान् ब्रह्म गमयति" इत्यनेन तत्सिद्धिरशंक्या । गमयतीत्यस्य प्राप्तिमात्रवाचित्वेनान्यथासिद्धत्वात् । देशविशेषावच्छिन्नब्रह्मस्वरूपसंबन्धस्यैव प्राप्तिशब्दार्थत्वात् ।

किञ्च — कार्याधिकरणगतेन "दर्शनाच्च" इति सूत्रेण ब्रह्म गमयतीत्यस्य "परं ज्योतिरुपसम्पद्य" इत्यनेनैकार्थतायाः दर्शितत्वेन तस्य संपत्तिरूपत्वसिद्ध्या तस्यानुभवरूपत्वोक्तेस्सम्पत्तिशब्दव्युत्पत्तिविरुद्धत्वाच्च ॥

अपि च — "परं ज्योतिरुपसम्पद्य" इत्यत्र ल्यप् प्रत्ययेन सपत्ते-स्स्वरूपाविर्भावपूर्वकालीनत्वावगमेन तदनतिरिक्तायाः "ब्रह्मगमयति" इत्युक्तब्रह्मप्राप्तेस्स्वरूपतिरोधानकालीनत्वावगमेन तस्या अनुभवरूपत्वोक्ते. बाधितत्वाच्च ॥

यदुक्तं कैश्चित् - "परं ज्योतिरुपसम्पद्य" इत्यत्र ल्यप् प्रत्ययोऽविवक्षितार्थः" इति । तत्सम्प्रदायानभिज्ञतानिबन्धनम् । "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रभाष्यश्रुतप्रकाशिकायामेव तस्य कण्ठतो निरस्तत्वात् । तथा हि — "उपसम्पद्येति निर्देशो 'मुख व्यादाय स्वपिति' इतिवत् इति केचिद्व्याचक्षते । तदयुक्तम् इत्यारभ्य, ल्यबन्तपदस्याविवक्षितक्रमत्वं च क्लिष्टम् । गत्यभावद्योतकम् । सम्पद्याविर्भाव इति सूत्रविरोधश्चेत्यादि ॥"

किञ्च — "अविभागेन दृष्टत्वात्" इति सूत्रभाष्यसिद्धान्ते परं ज्योतिरुपसम्पत्त्या निवृत्तविद्यातिरोधानयेति वाक्येन सपत्तेराविर्भावहेतुत्वस्यानुगृहीततया ल्यप् प्रत्ययस्याविवक्षितार्थत्वोक्तेस्तद्विरुद्धत्वाच्च । आविर्भावपूर्वकालावृत्तिनः तत्कारणत्वासंभवात् । तस्मात् परंज्योतिरुपसम्पद्येति श्रुतायास्सपत्तेः सुषुप्त्यादिसाधारण संपत्तिशब्दव्युत्पत्तिबलात्, ल्यप् प्रत्ययबलाच्च अनुभवरूपत्वाभवसिद्ध्या तदनतिरिक्तत्वेन कार्याधिकरणगत 'दर्शनाच्चे' ति सूत्रसिद्धायाः 'ब्रह्म गमयती' त्युक्तब्रह्मगतेरप्यनुभवानात्मकत्वसिद्ध्या न पञ्चाग्निविदा ब्रह्मानुभवे 'स एनान् ब्रह्म गमयती' ति श्रुतिः प्रमाणम् ।

परञ्च — 'अविभागेन दृष्टत्वा'दित्यधिकरणे 'अहं ब्रह्मास्मी'त्यविभागेनानुभवस्यैवात्मना स्वाभाविकतायाः सिद्धत्वेन पञ्चाग्निविदां तादृशानुभवप्रयोजकाहंब्रह्मोपासनाभावेनैव तादृशस्वाभाविकब्रह्मानुभवाभावस्य सिद्धत्वाच्च । न च तेषामप्यहंब्रह्मोपासनसम्भवश्शक्यशङ्कः । तथा सति पञ्चाग्निविद्याया अपि ब्रह्मविशेष्यकतया विद्याभेदस्यैव दुर्निरूपत्वापातात् । न च– 'अह'मिति

स्वविशिष्टं ब्रह्मानुसन्धाय तस्यैव स्वविशेषणत्वेनानुसन्धानसंभवात् नानुपपत्तिरिति वाच्यम् । स्वस्यैव स्वशरीरितावच्छेदकत्वासंभवेन तथानुसंधानस्य भ्रांतिरूपत्वापातात् । न च — स्वोपलक्षितं ब्रह्मैवाहमित्यनुसन्धाय तस्यैव स्वविशेषणतयानुसन्धानं शक्यम् । अहमर्थोपलक्षितब्रह्मानुसन्धानस्य अहमित्याकारकत्वायोगात् । विशेष्यप्रतीत्यनन्तर्गतस्यैव उपलक्षणत्वनियमात् । न हि घटत्वोपलक्षितस्य वस्तुनो भानं घट इत्याकारकं भवेत् । तस्मात् पञ्चाग्निविद्यायां ब्रह्मणोऽहंग्रहणस्य दुर्लभतया न तन्निष्ठाना स्वाभाविकब्रह्मानुभवः इति ॥

अपरञ्च — कार्याधिकरणदीपे पञ्चाग्निविदां ब्रह्मात्मकात्मप्राप्तिमात्रस्य, ब्रह्मविदामेव यथावस्थितब्रह्मानुभवस्य च मुक्तकण्ठं व्यवस्थापितत्वेन पञ्चाग्निविदामपि स्वाभाविकब्रह्मानुभवोक्तेस्तद्विरुद्धत्वाच्च । तदियं तत्सूक्तिः "पञ्चाग्निविदो हि प्रकृतिविविक्तब्रह्मात्मकात्मस्वरूपविदः ते च तत्प्राप्य पुनर्न निवर्तन्ते । परं ब्रह्मोपासीनास्तु यथावस्थितं परिपूर्णं परं ब्रह्मैव प्राप्य पुनर्न निवर्तन्ते । "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवंति ।" इत्युभयविधानभेदेनोपादायार्चिरादिगतिश्रुतेरपुनरावृत्तिश्रुतेश्चैवमिति निश्चीयते" इति ।

अत्र ब्रह्मवित्प्राप्यस्य यथावस्थितत्वपरिपूर्णत्वादि विशेषणेन पञ्चाग्निवित्प्राप्यस्य अयथावस्थितत्वापरिपूर्णत्वादिकं ज्ञापितम् । 'अस्यां परिषदि अयं प्रधानः' इत्युक्ते अन्येषामप्राधान्यसिद्धिवदत्राप्युक्तार्थसिद्धेः । तस्मात् पञ्चाग्निविदः स्वाभाविकब्रह्मानुभववैधुर्येण मुक्तिपदशक्यतावच्छेदककोटौ स्वाभाविकब्रह्मानुभवत्वस्यापि निवेशे पञ्चाग्निवित्फले मुक्तिव्यवहारभङ्गप्रसङ्गो दुर्वार एव । किञ्च — केवल भेदोपासनसाध्यायां भेदमुक्तौ सामीप्यलक्षणायां अविभागेनानुभवलक्षणब्रह्मानुभवाभावस्य तत्क्रतुन्यायसिद्धतया तत्रापि मुक्तिव्यवहारभङ्गप्रसङ्गो दुर्वार एव । न च — "योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मि

न स वेद अकृत्स्नोह्येष." इति निषेधात् भेदेनोपासनमेवासिद्धमिति शङ्कयम् । असिद्धत्वे तन्निषेधायोगात् । 'योऽन्या देवतामुपास्ते' इति प्रसिद्धवत् निर्देशायोगाच्च ॥

न च— अन्यतः प्राप्तमुपासनमनूद्य शास्त्रं निषेधतीति शक्यं वक्तुम् । कळञ्जभक्षणादिवदुपासनस्यान्यतः प्राप्त्यसम्भवेन शास्त्रेणैव प्राप्तेः वक्तव्यत्वात् । न च— शास्त्रप्राप्तमेव शास्त्रं निषेधयेत् । तथा सति शास्त्रस्य विप्रलम्भकत्वापातात् । तस्मात् "अपशवो वा अन्ये गो अश्वेभ्य." इत्यत्रापशुशब्दवत् प्रकृते "न स वेद" इत्येतद्वाक्यमपि केवलभेदोपासनस्याप्रशस्तवेदनत्वमभिदधत् सत् अभेदोपासनविधेरर्थवादता लभते इति भेदोपासनं प्रामाणिकमेव । ज्ञापितश्चैतदुपासनसद्भाव. तत्फलभूतायथावस्थितप्राप्तिसद्भावश्चात्मत्वोपासनाधिकरणपूर्वपक्षभाष्ये "यथावस्थितञ्च ब्रह्मोपास्यम् । अयथोपासने प्राप्तिरप्ययथाभूता स्यात् । "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात् । उपपादितञ्चेदमेव पञ्चाग्निविदामयथावस्थितप्राप्तिज्ञापकेन पूर्वोदाहृतकार्याधिकरणदीपवाक्येनापि ॥"

ननु— न वय केवलभेदेन ब्रह्मोपासनं नास्तीति वदामः । किंतु— तस्य मुक्तिसाधनत्वं नास्तीत्येतावन्मात्रमेव । अत एवायथोपासने प्राप्तिरप्ययथाभूता स्यादिति भाष्यश्रुतप्रकाशिकाया— "'अयथाभूता स्यात्' इति— संसारित्वप्राप्तिस्स्यात्, इत्यर्थः ।" इत्यनुगृहीतम् । तस्मात् केवल भेदोपासनस्य सांसारिकत्रिवर्गफलार्थत्वान्न तस्य मुक्तिसाधनत्वं प्रामाणिकमिति चेन्न । तर्हि पञ्चाग्निविद्याया अपि मुक्तिसाधनत्वाभावप्रसङ्गात् । तस्या अपि केवलभेदोपासनात्मकत्वात् । तत्रात्मत्वेन ब्रह्मानुसन्धानमस्तीति चेत्— किन्तेन ? आत्मत्वेनानुसन्धानस्यैव भेदानुसन्धानात्मकत्वेन "पृथगात्मानं प्रेरितारञ्च मत्वा" इत्यादि श्रुतिसिद्धत्वात् । स्वशरीरं प्रति स्वस्यात्मत्वेनानुसन्धानस्य विवेक-

रूपतया भेदानुसन्धानात्मकत्ववत् , स्वं प्रति ब्रह्मणः आत्मत्वानुसन्धानस्यापि जीव-परविवेकात्मकत्वेन भेदानुसन्धानरूपत्वात् । अनुगृहीतञ्च – "आत्मेति-तूपगच्छन्ति" इत्यादि सूत्रभाष्यान्ते – "पृथगात्मानं प्रेरितारञ्चमत्वेति पृथक्त्वानुसन्धानविधानम्" इति । "स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत् स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानञ्च रक्षितम्" इति च । तस्मात् पञ्चाग्निविदामात्मत्वेन ब्रह्मोपासनसद्भावेऽपि तस्यापि केवल-भेदोपासनात्मकत्वात भेदोपासनस्य मुक्तिसाधनत्वाभावनियमे पञ्चाग्निविद्याया अपि मुक्तिसाधनत्वाभावप्रसङ्गो दुर्वार एव ॥

तर्हि — श्रुतप्रकाशिकासूक्तेः कोऽर्थ इति चेत् – अग्निर्माणवकः इतिवदयथावस्थितप्राप्तेः संसारतुल्यतया तद् ज्ञापनार्थो गौणोऽयं निर्देशः । अन्यथा – भेदोपासनफलतया सर्वसंप्रतिपन्नस्य कैवल्यस्य संसारानन्तर्भावज्ञापकेन "जीवनम्-जीवनम्– संसारोन्मोचनम् । समिति कैवल्यव्यावृत्तिः" इति स्व-वचनेन साकं विरोधस्य दुरुद्धरत्वापातात् । अपि च —

"भेदेन वाप्यभेदेन मिश्रेणैव चतुर्मुख !
त्रिधैव मुक्तिरुदिता भेदे कैङ्कर्यलक्षणा ॥
मुक्तिर्यथेह लोकेषु परिचर्यापरा नराः ।
देवस्य तद्वदेवैते वैकुण्ठे परमात्मनः ॥
लोके तस्य समीपस्था मुक्तात्मानस्समाहिताः ।
वसंति किङ्करास्सन्तः तत्प्रसादपरास्सदा ॥
अभेदमुक्तिरत्यन्तमैक्यं स्यात्परजीवयोः ।
आत्मनो भावना चैक्ये सोऽहमित्येवमात्मिका ॥
यस्यैवमैक्यतापत्तिः जीवात्मपरमात्मनोः ।
सिद्धान्ते मिश्ररूपे तु भेदे स्थित्वार्चनादिभिः ॥

तोषयित्वा परं देवं ततो युक्तस्समाहितः ।
विज्ञानेनैकतानेन परमात्मनि चिद्घने ॥
ऐक्यं प्राप्नोति सा मुक्तिरुक्ता मायुज्यलक्षणा ।"

इति पाद्मसहिताज्ञानपादाष्टमाध्यायवचनैः भेदाभेदमिश्ररूपमुक्तित्रैविध्यस्य, तासां मुक्तीनां तत्क्रतुन्यायात् तत्तदनुगुणकृतिसाध्यत्वस्य, तत्र भेदमुक्तेः "वैकुण्ठे तु परे लोके" इत्युक्तमुक्तप्राप्यदिव्यनगरावच्छिन्नसामीप्यलक्षणत्वस्य, सर्वलोकसाधारणस्वार्थकैङ्कर्यलक्षणकेवलभेदोपासनादिभगवदाराधनसाध्यत्वस्य च मुक्तकण्ठं प्रतिपादितत्वेन सामीप्यादिभेदमुक्तेस्संसारान्तर्गतत्वोक्तिर्दुरुक्तिरेव । एतेन —

"लोकेषु विष्णोर्निवसति केचित् समीपमिच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥"

इत्यत्र सालोक्यादिषु मुक्तित्वाश्रवणमात्रेण तेषां तदनन्तर्भावसिद्धिरिति केषाञ्चित् शङ्का दूरोत्सारिता । "लोके तस्य समीपस्थाः मुक्तात्मानः" इति पूर्वोदाहृतवचनेन सामीप्यादेर्मुक्तित्वोक्तेः । "मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन । इच्छाम्यहं महाभाग सायुज्यं तव सुव्रत ।" इति जितन्तावचनेन सालोक्यादीनामपि मोक्षान्तर्भावसिद्धेश्च ॥

न च — "स तु मोक्ष उक्तः" इति वचनेनैवैतेषां वचनानां बाधश्शक्यशङ्कः । अन्यथासिद्धस्य बाधकत्वायोगात् । "स तु मोक्ष उक्तः" इत्यस्य अन्यो मोक्षो नोक्त इतःपूर्वं तव मयेत्यर्थपरत्वेनाप्यन्यथासिद्धेस्सुवचत्वात् । किञ्च — नह्यस्मिन् वचने सालोक्यादिकं न मुक्तिरित्युच्यते । येनानेन वचनान्तरबाधश्शक्येतापि सायुज्यमात्रस्य मुक्तित्वोक्तिबलेन अन्येषां मुक्तित्वं न्यायसिद्धमित्युक्तिरपि दुरुक्तिरेव । वचनविरोधे न्यायानवतारात् । प्रत्युत सत्यपि सालोक्यादीनां मुक्त्यन्तर्भावकण्ठोक्ति-

मद्वचनान्तरे तस्यैव बाधस्स्यात् । न पाञ्चसंहिता जितन्तावचनयोः । "पाञ्चरात्रं सर्वत्रैव प्रमाणं" इत्युक्तप्रमाणतम श्रीपाञ्चरात्रसारवचनस्य, तेनैव तत्र तत्र मन्त्रतया विनियुक्तस्य खिलऋक्जितन्ताह्वयमनुवचनस्य चात्यन्तप्रबलतया ताभ्यामेव तद्विरुद्धानां बाधनीयत्वात् । तस्मात् भेदोपासनसाध्यायाः भेदमुक्तेः प्रबलप्रमाणसिद्धतया प्रामाणिकैर्दुरपह्नवत्वेन मुक्तिपदशक्यतावच्छेदककोटौ स्वाभाविकब्रह्मानुभवत्वस्यापि निवेशे तत्र मुक्तिव्यवहारभङ्गप्रसङ्गो दुर्वार एवेति ॥

अन्यच्च — ब्रह्मानुभवस्यापि मुक्तिशब्दशक्यतावच्छेदकत्वे ब्रह्मानुभवविधुरतया सर्वसंप्रतिपन्ने कैवल्ये मुक्तिशब्दव्यवहारभङ्गप्रसङ्गो दुर्वार एव । न चायमिष्टः प्रसङ्गः इति वक्तुं शक्यम् । "मुक्तानां परमा गतिः" इति पञ्चमवेदसारभूतसहस्रनामाध्यायवचनात् 'मुक्तानामेव केषाञ्चिदर्वाचीना गतिर्गम्यते । श्रूयते च निर्मुक्तजरामरणकैवल्यलक्षणा, "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इति संसारपरमपदयोर्मध्ये तेषां स्थानञ्च, "योगिनाममृतं स्थानं स्वात्मसंतोषकारिणां" इत्यादि तद्भाष्यवचनात्, "स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता" इति श्रीवत्साङ्कमिश्रवचनात्, "जीवनमुज्जीवनं—संसारोन्मोचनम्; समिति कैवल्यव्यावृत्तिः" इति श्रुतप्रकाशिकाचार्यवचनात्, "मुक्तिः कैवल्यनिर्वाण" इति कोशसिद्धसमाख्याबलाच्च तत्र प्रामाणिकानां मुक्तित्वव्यवहारस्य दुरपह्नवत्वेन तदयोगात् ॥

न च — "चतुर्विधा मम जना भक्ताः एव हि ते श्रुताः । तेषामैकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः । अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् । ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ।" इति वचनैः पूर्वोक्तवचनानां बाधश्शङ्क्यः । अन्यथासिद्धैरेतैः तद्बाधायोगात् । नह्यत्र 'कैवल्यं न मोक्षः' इति कण्ठोक्तिः श्रूयते । त्रिविधभक्तत्वावच्छेदेन च्यवनधर्मत्वं श्रूयते इति चेत् — किन्तेन ? कैवल्यार्थिनः तत्त्रिविधभक्तान्तर्भावासिद्धेः ॥

"चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥" इति,

गीतोक्त चतुर्विधाधिकारिणामेवात्रापि प्रत्यभिज्ञानात् । तत्र ज्ञानिशब्दनिर्दिष्टस्यैवात्र एकान्तिप्रतिबुद्धशब्दाभ्यां निर्देशः इत्यौचित्याद्वक्तव्यत्वेन ज्ञानिव्यतिरिक्तस्य कैवल्यार्थिनः अत्रोक्तत्रिविधभक्तान्तर्भाव. एव सिध्यतीति चेन्न ॥

"देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः ।

भूतानि यान्ति भूतेज्या. यान्ति मद्याजिनोऽपि माम् ॥" इति

श्रीगीतानवमाध्यायोक्तचतुर्विधाधिकारिणामेवात्र प्रत्यभिज्ञानात् । तथाहि — "चतुर्विधा मम जनाः भक्ता एव हि ते श्रुताः ।" इत्यनेन, "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥" इति वचनार्थः प्रत्यभिज्ञायते । "तेषामेकान्तिनः श्रेष्ठाः ते चैवानन्यदेवताः" इत्यादिना, "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं ॥" इति वचनार्थः प्रत्यभिज्ञायते । "ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः" इत्यनेन,

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।

न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥" इति वचनार्थः प्रत्यभिज्ञायते । "प्रतिबुद्धस्तु" इत्यनेन "अभिजानन्ति तत्त्वेन" इत्युक्तमभिज्ञानं प्रत्यभिज्ञायते । तस्मान्नवमाध्यायोक्तचतुर्विधाधिकारिणामेवात्र प्रत्यभिज्ञापकबाहुल्यात् प्रतिबुद्धव्यतिरिक्तत्रिविधाधिकारिणां देवतान्तरपरत्वज्ञापकस्य "ते चैवानन्यदेवताः" इत्यस्याष्टमाध्यायोक्तभगवदेकपरचतुर्विधाधिकारिप्रत्यभिज्ञाभञ्जकत्वाच्च नात्र कैवल्यार्थिनः प्रतिपादनमिति नानेन कैवल्यमोक्षान्तर्भावज्ञापकवचनबाधः इति । अनुगृहीतञ्च यामुनाचार्यैरष्टमाध्यायोक्तानां चतुर्विधाधि-

कारिणामैकान्त्यांशे तौल्यम् । "ऐकान्त्यं भगवत्येषां समानमधिकारिणाम्" इति ॥

अथास्तु वा अष्टमाध्यायोक्ताधिकारिचतुष्टयस्यैव अत्र प्रत्यभिज्ञानम् । तथापि नानुपपत्तिः । कैवल्यमुक्तित्वस्य निरपेक्षप्रमाणान्तरसिद्धत्वेन प्रत्यभिज्ञादिसापेक्षस्यास्य तद्बाधकत्वायोगात् । उक्तञ्च पाद्मोत्तरखण्डे चतुस्त्रिंशेऽध्याये—

"विरजापरमव्योम्नोरन्तरं केवलं स्मृतम् ।
तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
स्वात्मानुभवजानन्दसुखदं केवलं पदम् ।
निश्श्रेयसं च निर्वाणं कैवल्यं मोक्ष उच्यते ॥
श्रीशांघ्रिभक्तिसेवैकरसभोगविवर्जितम् ॥

इत्यादिना कैवल्यस्य मोक्षान्तर्गतत्वं । अत्र "निश्श्रेयसञ्च निर्वाणं कैवल्यं मोक्ष उच्यते" इति मोक्षवाचकानां बहूनां पर्यायशब्दानां प्रयोगस्य कैवल्यविषयमुक्तित्वव्यवहारमुख्यतास्थापनैकप्रयोजकत्वेन तस्य मोक्षान्तर्भावो दुरपह्नव एवेति तत्र तद्व्यवहारभङ्गप्रसङ्गोऽनिष्ट प्रसङ्ग एव ॥

अपि च — श्रीगीताभाष्ये कैवल्यार्थिप्राप्यविषयस्य "अव्यक्तोऽक्षर इत्युक्तः तमाहुः परमां गतिम्" इति वचनगतस्याक्षरशब्दस्य "कूटस्थोऽक्षर उच्यते" इति वचनगतकूटस्थाक्षरशब्दैकार्थतया व्याख्यानात् । श्रीवेदान्तदीपादौ "कूटस्थो मुक्तस्वरूपम्" इति तद्वचनगतकूटस्थशब्दस्य मुक्तवाचितया व्याख्यानाच्च कैवल्यं मुक्तिरेवेति सिद्धम् ॥

किञ्च — "अक्षरं ब्रह्म परमं" इत्याद्यष्टमाध्यायवचनभाष्ये कैवल्यार्थिनां प्रकृतिविनिर्मुक्तात्मस्वरूपस्यैव प्राप्यतया वेद्यत्ववचनात् । आत्मसंबन्धिभूतसूक्ष्मतद्वासनादीनां त्याज्यतया वेद्यत्ववचनात् । "मुमुक्षुभिः ज्ञातव्यम्" इति तेषां मुमुक्षुत्वव्यपदेशाच्च सिद्धं कैवल्यं मुक्तिरेवेति ॥ परञ्च —

"मूर्ध्नि आधायात्मनः प्राणं मनो हृदि निरुध्य च ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥"

इत्यष्टमाध्यायवचने ' आत्मनः प्राण मूर्ध्न्याधाय ” इति मूर्धन्यनाड्या निष्क्रमणावगमेन तस्य “ शतञ्चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति इति मोक्षैकनियतत्वात् तस्य मूर्धन्यनाडीनिष्क्रमणप्राप कत्वस्य चन्द्रिकायामङ्गीकृतत्वाच्च तद्बलेन तत्सिद्धेश्च ॥

अपरञ्च — कैवल्यार्थिनामपुनरावृत्तेः श्रीगीताभाष्ये व्यक्तमनुगृहीतत्वेन तस्याश्च “ शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते । एकया यात्यनावृत्तिमन्ययावर्तते पुनः ” इत्यष्टमाध्यायवचनेन अर्चिरादिगत्यसाधारण्यसिद्ध्या तस्याश्च मोक्षासाधारणत्वेन तद्बलेन तत्सिद्धेश्च । तस्मात् कैवल्ये मोक्षव्यवहारस्य प्रामाणिकदुरपह्नवत्वेन मुक्तिपदशक्यतावच्छेदककोटौ स्वाभाविकब्रह्मानुभवत्वस्यापि प्रवेशे तत्र मुक्तिव्यवहारभङ्गप्रसङ्गो दुर्वार एवेति ॥

किञ्च — स्वाभाविकब्रह्मानुभवत्वस्य मुक्तिपदशक्यतावच्छेदकान्तर्भाव वदन् वादी प्रष्टव्यः । “ तस्य किं प्रयोजनम् ” इति । न तावत् परमत्यावृत्तिः प्रयोजनम् । संसारनिवृत्तिस्वरूपभेदमात्रेणैव तत्सिद्धेः । न हि परैस्संसारनिवृत्तेः परमसाम्यलक्षणत्वादिकमभ्युपगम्यते । तदभ्युपगमे वा तस्य मोक्षस्य मुक्तिपदशक्यतावच्छेदकत्वाङ्गीकारमात्रेण न तद्व्यावृत्तिः सिध्येत् । तेनापि तदभ्युपगमसंभवात् । तस्मात् संसारनिवृत्तिस्वरूपभेदमात्रेणैव परमतव्यावृत्त्या नात्र तत्प्रयोजनम् । अथ — नापि मोक्षव्यवहारादिप्रसङ्गादिपरिहारः । संसारनिवृत्तेस्त्वन्मते स्वाभाविकब्रह्मानुभवव्याप्यत्वेन व्यापकधर्मेण व्याप्यातिव्याप्त्यादिवारणासंभवात् । न च — केषाञ्चित्सिद्धान्ते ब्रह्मानुभवरहिते कैवल्यादौ संसारनिवृत्तिसत्त्वेन तत्रातिप्रसङ्गवारणमेव तस्य प्रयोजनमिति वाच्यम् । तन्मते तत्र मुक्तिव्यवहारस्यापीष्टत्वेन तदयोगात् ॥

तस्मात् सर्वसंप्रतिपन्नं संसारनिवृत्तित्वमेव मुक्तिशब्दशक्यतावच्छेदकं, नान्यदपीति पूर्वोक्तात्त्रधिकरणभाष्यस्य मुक्तिस्वरूपप्रदर्शनमात्रपरत्वात् , अविद्यानिवृत्तिरेव मोक्ष इति जिज्ञासाधिकरणभाष्यमेव मुक्तिशब्दशक्यतावच्छेदक-

शिष्टापर्यन्तेति पूर्वोक्तं तिरोधायकाचित्सम्बन्धनिवृत्तित्वमेव मुक्तिशब्दशक्यतावच्छेदकम् । अत्र तिरोधायकत्वं नाम स्वप्रयोज्यस्वसंबन्धावच्छिन्नाधेयतासंबन्धेन तिरोधानविशिष्टत्वम् । तिरोधानं नाम ज्ञानगतसङ्कोचात्मकावस्थाविशेषः । तादृशाचित्सम्बन्धनिवृत्तित्वं नाम तादृशचिन्निष्ठतिरोधायकतावच्छेदको यत्सम्बन्धः तत्प्रतियोगिकध्वंसत्वम् । तथा च विरजास्नानकालीनसूक्ष्मशरीरसम्बन्धध्वंसे लक्षणसमन्वयः । तत्सम्बन्धस्य तदात्मगततिरोधायकतायां सूक्ष्माचिन्निष्ठायामवच्छेदकत्वात् । अत्र बन्धकालीनस्थूलशरीरसम्बन्धध्वंसमादायातिप्रसङ्गवारणाय तादृशाचित्संसर्गध्वंसे निरवशेषत्वमपि विवक्षणीयम् । निरवशेषत्वं नाम स्वसमानाधिकरणस्वप्रतियोगितावच्छेदकासंस्रष्टासमानकालीनत्वम् । अत्र स्वपदं ध्वंसपरम् । तथा च बन्धकालीनदेहसम्बन्धध्वंसस्य स्वसमानाधिकरणः समानकालीनश्च यत्सूक्ष्मशरीरसम्बन्धः तस्य स्वप्रतियोगितावच्छेदकीभूतो योऽचिन्निष्ठतिरोधायकतावच्छेदकस्वरूपो धर्मः । तदवच्छिन्नत्वात् । तमादाय बन्धदशायां नातिप्रसङ्गः ॥

तथा च — स्वसमानाधिकरणतिरोधायकाचित्संसर्गासमानकालीनाचित्संसर्गध्वंसत्वं मुक्तिशब्दशक्यतावच्छेदकं इत्युक्तं भवति ॥

इदन्तु — "चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं" इत्यादि श्रुतिस्वारस्यानुसारान्मोक्षदशायामात्मनोऽचिद्विश्लेष एव । नाचिदंशध्वंसोऽपीति पराभिप्रायेण संसर्गध्वंसपर्यन्तानुधावनम् । चित्संसृष्टाचिदंशस्य चिद्विश्लेष एव नाश इति पक्षे तु तिरोधायकाचिध्वंस एव मोक्षः । स यद्यपि प्रतियोगिनाम्सम्बन्धेन आचिद्गतः । तथापि दैशिकविशेषणतासम्बन्धेनैव तस्य मुक्त इति व्यवहारप्रयोजकत्वान्नानुपपत्तिः । चिद्विश्लेषजनितचित्संसृष्टाचिध्वंसस्य चिदवच्छेदेनैव जायमानत्वात् । अत्रापि संसारदशायामतिप्रसङ्गवारणाय तिरोधायकाचिदनवच्छिन्नत्वेन ध्वंसो विशेषणीयः । तथाच स्थूलशरीरध्वंसस्य बद्धेषु

सूक्ष्मावच्छेदेनैव जायमानत्वात् नातिप्रसङ्गः । चरमशरीरध्वंसमाना शुद्धस्वरूपावच्छेदेनैव जायमानत्वान्नाव्याप्तिरसम्भवो वेति सर्वमवदातम् ।

यत्तु कैश्चिदुक्तम् — स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन कर्मप्रागभावविशिष्टान्यो यः कर्मध्वंसः स्वसामानाधिकरण्यस्वोत्तरत्वोभयसम्बन्धेन तद्विशिष्टानन्दत्वं मुक्तिपदशक्यतावच्छेदकमिति तच्चिन्त्यम् । विशेष्यवैयर्थ्यात् विशेषणेऽपि कर्मध्वंसे कर्मविशिष्टान्यत्वनिवेशनेनैव सामञ्जस्ये प्रागभावपर्यन्तानुधावनवैयर्थ्यात् । चरमकर्मकालीनोपान्त्यकर्मध्वंसमादाय बद्धदशायामतिप्रसङ्गाच्च ।

किञ्च— उत्थानकाल एव सर्वकर्मध्वंसस्य "साम्पराये तर्तव्याभावात्" इत्यादि सिद्धत्वेन तद्दशायामतिप्रसङ्गाच्च । न च तदानीं मोक्षव्यवहारः प्रामाणिकः । "तदापीतेस्संसारव्यपदेशात्" इति सूत्रेण देशविशेषावच्छिन्नब्रह्मप्राप्तिपर्यन्त संसारव्यपदेशोक्तेः । तस्मादस्मदुक्तं तिरोधाय काचिदनवच्छिन्नतादृशाचिद्धर्मत्वरूपसंसारनिवृत्तित्वमेव अनुगतमनतिप्रसक्तं लघुभूतं सर्वसंप्रतिपन्नं चेति तदेव मुक्तिमोक्षादिशब्दशक्यतावच्छेदकं सर्वैरादरणीयं इत्यास्तां विस्तरः ॥

ननु – अनेकार्थकल्पनायोगात् भगवच्छब्दवत् मुक्तिशब्दस्यापि कुत्रचिन्मुख्यत्वं तदन्यत्र गौणत्वमेवेति किमिति नाभ्युपगतमिति चेत् भ्रान्तोऽसि । न ह्यत्र योगवृत्तिनिमित्तमुच्यते ; येनात्र भगवच्छब्दन्यायावतारस्स्यात् । किन्तु मुक्तिमोक्षामृतनिर्वाणनिश्श्रेयसादिमुक्तिरूढसर्वपर्यायसाधारण रूढिप्रवृत्तिनिमित्तमेव । यथा शरीरतन्वाकाररूपादिसर्वपर्यायसाधारण रूढिनिमित्तमपृथक्सिद्धाधाराधेयभावादिकं तद्वत् ॥

तथा च मुक्तिमोक्षादिशब्दाना कैवल्यादिष्वपि मुख्यतायाः पाद्मोत्तरखण्डादिसिद्धत्वेन तत्र सर्वत्रानुगतमनतिप्रसक्तं च यत्तदेव मुक्त्यादिशब्दरूढिनिमित्तं वक्तव्यमिति यथोक्तमेव तदुपपन्नतरमिति सर्वं समञ्जसम् ॥

श्रीवाधूलमहाचार्यचिन्तासन्तानजन्मना ।
श्री श्रीनिवासदासेन कृतेयं कृतिरेधताम् ॥

